भारतीयविद्या-श्रेणी—ग्रन्थः ३८

# मनुस्मृति

## मेधातिथि-सर्वज्ञनारायण-कुल्लूक-राघवानन्द-नन्दन-रामचन्द्र-मणिराम-गोविन्दराज-भारुचि

इति व्याख्यानवकेन समलङ्कृता

◎

## चतुर्थो विभागः

(भागः १–७ अध्यायात्मकः)

◎

सम्पादकः

**जयन्तकृष्ण हरिकृष्ण दवे**

महामहोपाध्याय, विद्यावाचस्पति

एम्.ए., एल्एल्.बी., ॲड्व्होकेट (सु. को.)

इत्यनेन

भारतीयविद्याभवनस्य संमान्यनियामकेन परिष्कृता

◎

भारतशासनस्य शिक्षणविभागस्यार्थसाहाय्येन प्रकाशिता

१९८५

**भारतीय विद्या भवनम्**

कुलपति के. एम्. मुनशीपथः, चौपाटी

मुम्बई ४०० ००७

Bhāratiya Vidyā Series—Vol. No. 38

# MANU-SMṚTI

With Nine Commentaries by Medhātithi, Sarvajñanārāyaṇa, Kullūka, Rāghavānanda, Nandana, Rāmacandra, Maṇirāma, Govindarāja and Bhāruci

VOLUME IV (Part-I : Adhyāya-7)

*Edited by*
JAYANTAKRISHNA HARIKRISHNA DAVE
Mahāmahopādhyāya, Vidyāvācaspati
M.A., LL.B., ADVOCATE (SUPREME COURT)
Hon. Director, Bharatiya Vidya Bhavan

*Published with the financial assistance of the Ministry of Education, Government of India*

1985
**BHARATIYA VIDYA BHAVAN**
Kulapati K. M. Munshi Marg, Chowpatty, Bombay-400 007

# INTRODUCTION

Manusmriti, with nine Commentaries by Medhātithi, Sarvajñanārāyaṇa, Kullūka, Rāghavānanda, Nandana, Rāmacandra, Maṇirāma, Govindarāja and Bhāruci, is intended to be published in 6 volumes — each volume covering two Adhyāyas.

Volumes 1, 2, 3, 5 and 6 have already been published earlier. This is the fourth volume Part I covering the seventh Adhyāya and Part II covering eighth Adhyāya is expected to be out shortly.

This project with these nine commentaries has been undertaken by the Bharatiya Vidya Bhavan with the financial assistance of the Ministry of Education, Government of India. The Editor expresses warm thanks to the Government of India for the kind and continued financial assistance.

Publication of this and remaining volume has been delayed for various reasons, including press and paper problems. However, the second part of this volume is expected to come out soon.

Bharatiya Vidya Bhavan,
Kulapati K. M. Munshi Marg,
Bombay-400 007.
30-3-1985

**Jayantakrishna Harikrishna Dave**

# मनुस्मृतिः

## सप्तमाध्याय-विषयानुक्रमकोशः

| विषयः | | | | श्लो. |
|---|---|---|---|---|
| धान्यादीनां करग्रहणम् | .. | .. | ७ | १३० |
| श्रोत्रियात्करं न गृह्णीयात् | .. | .. | ७ | १३१–१३३ |
| श्रोत्रियवृत्तिकल्पनम् | .. | .. | ७ | १३४ |
| शाकादिव्यवहारिणः स्वल्पकरः | .. | .. | ७ | १३५–१३७ |
| शिल्प्यादिकं कर्म कारयेत् | .. | .. | ७ | १३८ |
| स्वल्पादिकरप्रचुरग्रहणनिषेधकथनम् | .. | .. | ७ | १३९ |
| तीक्ष्णमृदुताचरणम् | .. | .. | ७ | १४० |
| अमात्येन सह कार्यचिन्तनम् | .. | .. | ७ | १४१ |
| दस्युनिग्रहणस्य शंसनम् | .. | .. | ७ | १४२–१४३ |
| प्रजापालनस्य श्रेष्ठत्वम् | .. | .. | ७ | १४४ |
| सभाप्रवेशनम् | .. | .. | ७ | १४५ |
| एकान्ते गोप्यमन्त्रणम् | .. | .. | ७ | १४६–१४७ |
| मन्त्रणकाले स्त्र्याद्यपसारणम् | .. | .. | ७ | १४८–१४९ |
| धर्मकामादिचिन्तनम् | .. | .. | ७ | १५०–१५१ |
| दूतसंप्रेषणादिकथनम् | .. | .. | ७ | १५२–१५३ |
| अथप्रकृतिप्रकाराः | .. | .. | ७ | १५४–१५६ |
| अरिप्रकृतयः | .. | .. | ७ | १५७–१५८ |
| अथ षड्गुणाः | .. | .. | ७ | १५९–१६० |
| संध्यादिप्रकारः | .. | .. | ७ | १६१–१६२ |
| संधिविग्रहादिकालाः | .. | .. | ७ | १६३–१६९ |
| बलिनृपसंश्रयणे | .. | .. | ७ | १७०–१७५ |
| आत्मानमधिकं कुर्यात् | .. | .. | ७ | १७६–१७७ |
| आगामिगुणदोषचिन्तनम् | .. | .. | ७ | १७८ |
| राजरक्षाकथनम् | .. | .. | ७ | १७९–१८० |
| अरिराज्ययानविधिशंसनम् | .. | .. | ७ | १८१ |
| शत्रुसेविमित्रादौ सावधानत्वम् | .. | .. | ७ | १८२–१८६ |
| व्यूहकरणे | .. | .. | ७ | १८७ |
| जलादौयुद्धप्रकारशंसनम् | .. | .. | ७ | १८८–१९२ |
| अग्रानीकयोग्यानाह | .. | .. | ७ | १९३ |

| विषयः | | | | श्लो. |
|---|---|---|---|---|

# म नु स्मृ तिः

व्याख्यानवकोपेता

•

## सप्तमोऽध्यायः ७

•

**राजधर्मान्प्रवक्ष्यामि यथावृत्तो भवेन्नृपः ।**
**संभवश्च यथा तस्य सिद्धिश्च परमा यथा ॥ १ ॥**

(१) **मेधातिथिः** । 'धर्मशब्दः कर्तव्यतावचन' इत्युक्तम् । यद्राज्ञः कर्तव्यं तदिदानीमुच्यत इति प्रतिज्ञा । कर्तव्यं च दृष्टार्थं षाड्गुण्यादि, अदृष्टार्थमग्निहोत्रादि । तत्रेह प्राधान्येन दृष्टार्थमुपदिश्यते । तत्रैव च राजधर्मप्रसिद्धिः । राजशब्दस्तु नेह क्षत्रियजातिवचनः । किं तर्हि ? अभिषेकाधिपत्यादिगुणयोगिनि पुरुषे वर्तते । अत एवाह **यथावृत्तो भवेन्नृपः** । 'नृप'ग्रहणेन जनपदैश्वर्यवतोऽधिकारमाह । प्रमाणान्तरमूला ह्यत्र धर्मा उच्यन्ते, न सर्वे वेदमूलाः । अन्यमूलत्वे च यदत्र धर्मशास्त्राविरुद्धं तदुच्यते । तथा च **कात्यायनः** "अर्थशास्त्रोक्तमुत्सृज्य धर्मशास्त्रोक्तमाव्रजेदिति" । **यथावृत्तः** यद्वृत्तं यत्प्रकारं वाऽस्येति च बहुव्रीहिः । अन्यपदार्थो राजा । यथार्थप्राधान्येऽव्ययीभावः स्यात् । **वृत्तं** परिपालनार्थो व्यापारोऽदृष्टार्थश्च । **संभवश्चोत्पत्तिः** । स उक्तो "राजानमसृजत्प्रभुः" (७/३) इत्यादिना । **परमा** प्रकृष्टा सिद्धिर्विजिगीषोरैकाधिपत्यम् । राजवृत्तस्य फलप्रतिज्ञेयम् ॥ १ ॥

(२) **सर्वज्ञनारायणः** । एवं तावत्पञ्चभिरध्यायैर्ब्राह्मणस्यासाधारणधर्माः कथिताः, अधुना द्वितीयवर्णस्य क्षत्रियस्यासाधारणधर्मानाह **राजधर्मानिति** । धर्मो धर्मसाधनं । यथावृत्तो यदाचारः । संभवः सृष्टचादौ । सिद्धिर्दृष्टार्थसिद्धिः ॥ १ ॥

(३) **कुल्लूकः** । धर्मशब्दोऽत्र दृष्टादृष्टार्थानुष्ठेयपरः, षाड्गुण्यादेरपि वक्ष्यमाणत्वात् । 'राज'शब्दोऽपि नात्र क्षत्रियजातिवचनः किंत्वभिषिक्तजनपदपुरपालयितृपुरुषवचनः । अत एवाह **यथावृत्तो भवेन्नृप इति** । यथावदाचारो नृपतिर्भवेत्तथा तस्यानुष्ठेयानि कथयिष्यामि **यथा** येन प्रकारेण वा 'राजानमसृजत्प्रभु'(७/३)रित्यादिना तस्योत्पत्तिः, यथा च दृष्टादृष्ट-फलसंपत्तिस्तदपि वक्ष्यामि ॥ १ ॥

(४) **राघवानन्दः** । 'राजा धर्मस्य कारण' मित्यनुशासनान्नृपतिधर्मयोः कार्यकारण-संगतिरध्यायद्वये । **राजधर्मानिति** । राजपदमत्रावेष्टयधिकरणन्यायेनान्ध्रप्रसिद्धिमाश्रित्य राजन्यपरं प्रजापालनकण्टकोद्धरणादिना राज्यस्य कर्तरि वर्णान्तरे च लाक्षणिकमिति उत्तरे च ब्राह्मं प्राप्तेन संस्कारं क्षत्रियेणेति, अन्ते च 'क्षत्रियस्यापराधेन ब्राह्मणः सीदति क्षुधा । वेदाभ्यासो हि विप्रस्य क्षत्रियस्याभिरक्षणम्' । नाक्षत्रं ब्रह्म वर्धते क्षत्रियाय ददौ राज्यं संध्यां

चोपास्य शृणुयादित्यादिस्वरसात् । नतु ब्राह्मणादौ राजधर्माप्राप्तिरिति । 'अजीवंस्तु यथोक्तेन ब्राह्मणः स्वेन तेजसा। जीवेत्क्षत्रियधर्मेण स ह्यस्य प्रत्यनन्तर' (१०/८१) इत्यापदि मनुवचनादेव धर्माः कर्तव्याः। तत्रादृष्टमग्निहोत्रादि तदर्थं ऋत्विगादि दृष्टं प्रजापालनादि तदर्थं षाड्गुण्यादि तयोः प्राप्तिः। यथावृत्तो यथाचारो भवेत् । संभवश्चेन्द्रादिभ्य उत्पत्तिः । सिध्दी रणे नैव ॥ १ ॥

(५) **नन्दनः** । एवं प्रतिपादितस्याश्रमधर्मस्य रक्षाधिकारिणं राजानं प्रति धर्मान्प्रस्तौति **राजेति** । यथावृत्तो यत्प्रकारवृत्तो नृपो भवेत् नॄन् पातुं शक्नुयात् तथा च वक्ष्यामि। सिद्धिरैहिकामुष्मिकफलम् ॥ १ ॥

(६) **रामचन्द्रः**। राजधर्मानाह **राजधर्मानिति । यथावृत्तः** यथाचारः **नृपो भवेत्** तस्य राज्ञः यथासंभवः सृष्टयादौ जन्म तस्य **यथा** सिद्धिः कार्यसिद्धिः एतादृशान्वक्ष्यमाणलक्षणान्राजधर्मान्प्रवक्ष्यामि ॥ १ ॥

(८) **गोविन्दराजः** । **राजधर्मानिति** । नृपतिना यथाचारेण भवितव्यं, वीक्ष्य दृष्टादृष्टार्थान् कर्तव्यान् कथयिष्यामि । तथा येन प्रकारेण राज्ञ उत्पत्तिर्यथा च प्रकृष्टा दृष्टादृष्टार्थफलसंपत्तिस्तद्वक्ष्यामि ॥ १ ॥

(९) **भारुचिः** । एवमेकाश्रम्यं चातुराश्रम्यं च सविक(? ल्पं) सिद्धिस्तु परमा राज्ञः स्वीकृता । सर्वराजमण्डलस्यानन्तरं सकलमहीमण्डलाधिपत्ये सति निरतिशया धर्मार्थं सुखत्रिवर्गाभ्युदयप्राप्तिरप (रमात्या) दिप्रकृतिसम्पत् ॥ १ ॥

**ब्राह्मं प्राप्तेन संस्कारं क्षत्रियेण यथाविधि ।**
**सर्वस्यास्य यथान्यायं कर्तव्यं परिरक्षणम् ॥ २ ॥**

(१) **मेधातिथिः**। 'ब्रह्म' वेदः । तत्र श्रुतः संस्कारो '**ब्राह्मः**' । स वेदाध्ययनजन्यो ग्रहणवतोऽर्थलक्षणो वेदस्य; स्वाध्यायविधिनिर्वर्त्य इत्यर्थः । उपनयनं तु ब्रह्मग्रहणार्थत्वाद् ब्राह्ममिति युक्तम् । तथा च वक्ष्यति (७/४३) "त्रैविद्येभ्यस्त्रयीं विद्याम्"इति । इतरथा विदितवेदितोपदेशः स्यात् । गर्भाधानादिस्मृतिशास्त्रदृष्टचत्वारिंशसंस्कारम् ।

क्षत्रियेणेति। एतेन क्षत्रिय एव राज्याधिकारीति सूचितम्। क्षत्रियाभावे तदतिदेशोऽपि ग्राह्यः। अन्यथा प्रजालोपः स्यादिति भावः।

सर्वस्य करदस्य दीनानाथादेश्च। **अस्येति** स्वविषयवासिनां यथास्वं जनपदपुरनिर्देशः। **यथान्यायम्** । न्यायः शास्त्रं धर्मशास्त्ररूपम्, नार्थशास्त्रमौशनसादिप्रणीतम्, तमनतिक्रम्य। **परिरक्षणं** परिपालनम्। अपायपरिहारः, दुर्बलानां बलवद्भिरनभिभवः, शास्त्रमर्यादानतिक्रमश्च। दुःखत्राणं **परिरक्षा**। शास्त्रातिक्रमे चादृष्टं दुःखम्। अतस्तदनतिक्रमे राजभयेन रक्षिता भवन्ति। राजदण्डे दुःखमिति चेन्महतो नरकादिदुःखाद्राजदण्डनमल्पीयः। **कर्तव्यमिति** विधिः। अधिकारश्चाष्टमे निरूपितः ॥२॥

(२) **सर्वज्ञनारायणः**। ब्राह्मं तूपनयनादिस्नानान्तम् ॥२॥

(३) **कुल्लूकः**। **ब्रह्म वेदस्तत्प्राप्त्यर्थतयोपनयनसंस्कारस्तं यथाशास्त्रं प्राप्नुवता क्षत्रियेणास्य सर्वस्य स्वविषयावस्थितस्य शास्त्रानुसारेण नियमतो रक्षणं कर्तव्यम्।**

एतेन क्षत्रिय एव नान्यो राज्याधिकारीति दर्शितम्। अत एव शास्त्रार्थतत्त्वं क्षत्रियस्य जीवनार्थं, तथा क्षत्रियस्य तु रक्षणं स्वकर्मसु श्रेष्ठं च वक्ष्यति, ब्राह्मणस्य ह्यापदि 'जीवेत्क्षत्रियधर्मेणे' (१०/८१) त्यभिधास्यति। वैश्यस्यापि क्षत्रियधर्मं शूद्रस्य च क्षत्रियवैश्यकर्मणी जीवनार्थमापदि जगाद **नारदः** 'न कथंचन कुर्वीत ब्राह्मणः कर्म वार्षलम्। वृषलः कर्म च ब्राह्मं पतनीये हि ते तयोः॥ उत्कृष्टं चापकृष्टं च तयोः कर्म न विद्यते। मध्यमे कर्मणी हित्वा सर्वसाधारणे हि ते॥ रक्षणं वेदधर्मार्थं तपः क्षत्रस्य रक्षण'मिति 'सर्वतो धर्मषड्भागो राज्ञो भवति रक्षत' (८/३०४) इति च वक्ष्यमाणत्वात् रक्षितुर्बलिषड्भागग्रहणात् 'दृष्टार्थमपि योऽरक्षन्बलिमादत्त' (८/३०७) इति नरकपातं वक्ष्यति ॥२॥

(४) **राघवानन्दः**। ब्रह्म वेदस्तत्कृतं संस्कारमुपनयनवेदाध्ययनादिप्राप्तेन **क्षत्रियेण** ॥२॥

(५) **नन्दनः**। अभिषेकादिसंस्कारयुक्तस्य क्षत्रियस्य रक्षायामधिकारो नान्यस्येत्याह **ब्राह्ममिति**। ब्राह्मं संस्कारं वैदिकमुपनयनाभिषेकादिकं संस्कारं प्राप्तो यस्तस्यैव रक्षायामधिकारो नान्यस्येति ॥२॥

(६) **रामचन्द्रः**। **ब्राह्मं** संस्कारं उपनयनादिसंस्कारान् प्राप्तेन **क्षत्रियेण यथाविधि अस्य सर्वस्य जगतः परिरक्षणं** कर्तव्यम् ॥२॥

(८) **गोविन्दराजः**। **ब्राह्ममिति**। वेदाधिगमार्थमुपनयनार्थं स्नानपर्यन्तं **यथाशास्त्रं संस्कारं** प्राप्तवता **क्षत्रियेण सर्वस्यास्य** जगतः शास्त्रमर्यादानतिक्रमेण नियमतो **रक्षणं कर्तव्यम्**, वृत्त्यर्थत्वेऽपि 'तपः क्षत्रस्य रक्षणम्' इति अदृष्टार्थत्वेनापि रक्षणोपदेशात् ॥२॥

(९) **भारुचिः**। तत्र सिद्धिमवेक्ष्येदमुच्यते 'ब्राह्मं प्राप्तेन संस्कारं क्षत्रियेण **यथाविधि**। सर्वस्यास्य यथान्यायं कर्तव्यं परिरक्षणम्'। ब्रह्मणे ब्रह्मणो वा संस्कारः ब्राह्मं उपनयनादिः। स्नानान्तस्तं प्राप्तेन क्षत्रियेण, नान्यवर्णेन। **यथाविधि** यथाशास्त्रं। सर्वस्यास्येत्यनेनाभिनयेन वर्णाश्रमौ निर्दिशति। यथान्यायं यथोपदेशं कर्तव्यं। **परिरक्षणमिति**। अन्यवृत्तिपरिसंख्येयं नियमो वा। एके तु दृष्टार्थत्वादुपदेशं वृत्त्यर्थं मन्यन्ते। तथा च सति पित्र्ये धने निध्यधिगमेऽन्यथा प्राप्तौ न नियोगतः क्षत्रियो राजन्यमातिष्ठेदिति। तदयुक्तम् – 'वेदाभ्यासो ब्राह्मणस्य क्षत्रियस्य तु रक्षणम्। वार्ताकर्म च वैश्यस्य विशिष्टानि स्वकर्मसु॥' (१०/८०) इत्युक्तत्वाद्विशिष्टत्वं चैषां दृष्टादृष्टसम्बन्धेन युक्तम्। नियमाश्रयश्चादृष्टसंबंधः आवृत्तिश्च राज्ञा रक्ष्यन्ते। यतो दृष्टार्थमेव रक्षणम्, अराज्ञोऽपि च क्षत्रियस्य ग्रामादिसंरक्षणेऽप्येतदर्थवत् नियमशास्त्र...॥२॥

**अराजके हि लोकेऽस्मिन्सर्वतो विद्रुते भयात्।**
**रक्षार्थमस्य सर्वस्य राजानमसृजत्प्रभुः ॥३॥**

(१) **मेधातिथिः**। **विद्रुते** पीडितेऽप्रतिष्ठिते वा। **प्रभुः** प्रजापतिः। स्तुतिरियम् ॥३॥

(२) **सर्वज्ञनारायणः**। **विद्रुते** कल्पादौ ॥३॥

(३) **कुल्लूकः**। यस्मादराजके जगति बलवद्भयात्सर्वतः प्रचलिते सर्वस्यास्य चराचरस्य रक्षार्थं राजानं सृष्टवांस्तस्मात्तेन रक्षणं कार्यम् ॥३॥

(४) **राघवानन्दः**। तत्र पुरावृत्तमाह **अराजक** इति। **विद्रुते** पीडिते। **प्रभुः** प्रजापतिः ॥३॥

(५) **नन्दनः**। तत्र हेतुः तामधिकृत्य तस्य सृष्टत्वमित्याह **अराजके** हीति। **सर्वतो भया**द्दैविकान्मानुषाच्च **प्रभुः** प्रजापतिः ॥३॥

(६) **रामचन्द्रः**। **अराजके**ऽस्मिँल्लोके भयात्**सर्वतो विद्रुते** सति अस्य विश्वस्य रक्षार्थं **प्रभू राजानमसृजत्** ॥३॥

(८) **गोविन्दराजः**। **अराजक** इति। यस्मात्पूर्वमविद्यमानराजके **अस्मिन्** जगति भयेन समंतात् प्रचलति सति **अस्य** जगतो **रक्षार्थं** हिरण्यगर्भो **राजानं** सृष्टवान्, तस्मात्तेन रक्षणं कर्तव्यम् ॥३॥

(९) **भारुचिः**। साधारणमधुनोच्यते तन्निवृत्त्यर्थं राजोत्पत्तिरनेन प्रदर्श्यते। पूर्वविधिस्तुतिरियम् ॥३॥

**इन्द्रानिलयमार्काणामग्नेश्च वरुणस्य च।**
**चन्द्रवित्तेशयोश्चैव मात्रा निर्हृत्य शाश्वतीः ॥४॥**

(१) **मेधातिथिः**। **अनिलो** वायुः। **वित्तेशो** धनपतिर्वैश्रवणः। **मात्रा** अवयवाः। शाश्वतीः सारभूताः। **निर्हृत्य** निष्कृष्य ॥४॥

(२) **सर्वज्ञनारायणः**। **मात्रा** अवयवान्। **निर्हृत्या**कृष्य ॥४॥

(३) **कुल्लूकः**। कथं सृष्टवानित्याह **इन्द्रेति**। इन्द्रवातयमसूर्याग्निवरुणचन्द्रकुबेराणां **मात्रा** अंशान्सारभूतानाकृष्य राजानमसृजत् ॥४॥

(४) **राघवानन्दः**। सर्वनियन्तृत्वविधानार्थमुत्पत्तिस्वरूपकथनेन स्तौति **इन्द्रेति** द्वाभ्याम्। **वित्तेशः** कुबेरः। **मात्राः** सारभूतांशाः दधिमण्डस्य नवनीतवत्। **शाश्वती**र्मन्वन्तरव्यापिनीः। **निर्हृत्य** निष्कृष्य ॥४॥

(५) **नन्दनः**। किमुपादायासृजदित्यपेक्षायामाह **इन्द्रेति**। **शाश्वतीर्मात्राः** स्वाभाविकानंशान् इन्द्रस्यैश्वर्यम्, अनिलस्य बलं इत्यादिकाः शक्तीरित्यर्थः। **निर्हृत्या**सृजदित्यनुषङ्गः ॥४॥

(८) **गोविन्दराजः**। कथमसृजदित्याह **इन्द्रानिलयमार्काणामिति**। इन्द्रवायुयमादित्याग्निवरुणचन्द्रवैश्रवणानां संबन्धिनोंऽशान् सारभूतान्निष्कृष्य राजानमसृजत् ॥४॥

(९) **भारुचिः**। 'बालोऽपि नावमन्तव्य' (७/८) इत्यस्य विधेर्वक्ष्यमाणस्येमे दश श्लोकाः शेषतया विज्ञेयाः। एवमिन्द्रादीनां स्वविषये येन चेष्टां करोति तेन तेषां मात्राभ्यो निर्मित इत्युच्यते ॥४॥

**यस्मादेषां सुरेन्द्राणां मात्राभ्यो निर्मितो नृपः।**
**तस्मादभिभवत्येष सर्वभूतानि तेजसा ॥५॥**

(१) **मेधातिथिः**। **एषा**मिन्द्रादीनां सुरश्रेष्ठानां **मात्रा**भिस्तेजोंशैर्निर्मितस्तस्माद्धेतो**रभिभवति** दुर्निरीक्ष्यमुखो भवति। **तेजसा** हेतुना।

निष्कृष्य **निर्मित** उत्पादितः यतः 'कृषि'रुत्पादने धातुर्वर्तते। तेनापायावधित्वान्मात्राभ्य इति पञ्चमी तृतीया वा पठितव्या ॥५॥

(२) **सर्वज्ञनारायणः**। **तेजसा** वीर्येण ॥५॥

(३) **कुल्लूकः**। यस्मादिन्द्रादीनां देवश्रेष्ठानामंशेभ्यो नृपतिः सृष्टस्तस्मादेष सर्वप्राणिनो वीर्येणातिशेते ॥५॥

(४) **राघवानन्दः**। तदेवाह यस्मादिन्द्रादीनां मात्राभिर्निर्मितो नृपस्तस्मात्स्वतेजसा **सर्वभूतान्यभिभवत्येष** इति ॥५॥

(५) **नन्दनः**। उक्तस्य प्रत्यक्षत्वं श्लोकत्रयेणोपपादयति **यस्मादिति** ॥५॥

(६) **रामचन्द्रः**। **यस्मात्**कारणादेषां **सुरेंद्राणा**मिन्द्रादिलोकपालानां **मात्राभ्यों**ऽशेभ्यो निर्मितो नृपस्तस्मात्कारणा**त्तेजसा सर्वभूतान्यभिभवति** ॥५॥

(८) **गोविन्दराजः**। **यस्मादिति**। तेषामिन्द्रादीनां देवेश्वराणां संबन्धिभ्यः अंशेभ्यो यस्मान्नृपतिः कृतः, तस्मादेष प्राणिनो वीर्येणाधरीकरोति ॥५॥

(९) **भारुचिः**। कार्येणैतदर्थं दर्शयति – यस्मादाधिपत्यैश्वर्यात् सर्वभूतान्यभिभवति स्वेन तेजसा, अत इन्द्रादिदेवतामात्राभ्यो निर्मित इति स्तूयते ॥ ५ ॥

**तपत्यादित्यवच्चैष चक्षूंषि च मनांसि च।**
**न चैनं भुवि शक्नोति कश्चिदप्यभिवीक्षितुम् ॥ ६ ॥**

(१) **मेधातिथिः**। **तपति** तपतीव संमुखोऽशक्यदर्शनत्वादेवमुच्यते। तदाह **न चैनं भुवि शक्नोति**। ब्राह्मणजात्युत्कृष्टा ब्रह्मवर्चस्विनोऽपि **नैनमभिमुखं वीक्षितुं** शक्नुवन्ति। तदुक्तं "तमुपर्यासीनमधस्तादुपासीरन्" ॥६॥

(२) **सर्वज्ञनारायणः**। **तपत्यादित्यव**दित्यंशोपपादनमितरेष्वप्येवं स्वयमूह्यम् ॥६॥

(३) **कुल्लूकः**। अयं च राजा स्वतेजसा सूर्य इव पश्यतां **चक्षूंषि मनांसि** च संतापयति। न **चैनं** राजानं पृथिव्यां कश्चिदप्याभिमुख्येन द्रष्टुं क्षमते ॥६॥

(४) **राघवानन्दः**। कार्येणापि तदंशोऽनुमेय इत्याह **तपतीति** द्वाभ्याम्। दुष्टानां चक्षुर्मनसोः संतापजननात्तद्दर्शनानिष्ठाक्षमत्वं सूचितं। साधूनां न तपति विमलं प्रसाधयति ॥६॥

(६) **रामचन्द्रः**। सर्वेषां चक्षूंषि **मनांसि** चार्कवन्नृप**स्तपति** संतापयतीत्यर्थः ॥६॥

(८) **गोविन्दराजः**। **तपतीति**। **एष च** राजा पश्यतां स्ववीर्येण **चक्षूंषि मनांसि च** आदित्यवत्संतापयति, **नचैनं** राजानं वीर्येणातिशययोगा**त्कश्चिदपि** पृथिव्यामाभिमुख्येन **वीक्षितुं शक्नोति**। एवं चेन्द्रांशांशोद्भवत्वादिति कथनार्थम् ॥६॥

(९) **भारुचिः**। महाराजलिङ्गेन चामरछत्रभृङ्गादिना युक्तो दीप्तिमत्त्वाच्चक्षूंष्यादित्यवत् तापयति। मनांसि दण्डपातनाद् यस्मादतो न कश्चिदेनं शक्नोत्यभिवीक्षितुमपि किं पुनः (अ)पाकर्तुम्। पूर्ववदयमपि स्तुत्यै। एवं च सति तास्ववस्थासु कार्यार्थम् ॥६॥

**सोऽग्निर्भवति वायुश्च सोऽर्कः सोमः स धर्मराट्।**
**स कुबेरः स वरुणः स महेन्द्रः प्रभावतः ॥ ७ ॥**

(१) **मेधातिथिः**। अग्न्यादिदेवतानां मात्राशयत्वात्तच्छक्तियोगितयैवमुच्यते । **प्रभावो**ऽलौकिकी या शक्तिः ॥७॥

(२) **सर्वज्ञनारायणः । प्रभावतः** प्रभाववानेवैवं भवतीत्यर्थः ॥७॥

(३) **कुल्लूकः**। एवं चाग्न्यादीनां पूर्वोक्तांशभवत्वात्तत्कर्मकारित्वाच्च 'प्रतापयुक्तस्तेजस्वी'(९/३१०)त्यादिना नवमाध्याये वक्ष्यमाणत्वात्स राजा शक्त्यतिशयेनाग्न्यादिरूपो भवति ॥७॥

(४) **राघवानन्दः । स धर्मराट्** यमः । **प्रभावतः** ऐश्वर्येण ॥७॥

(५) **नन्दनः । प्रभावतः** शक्तितः ॥७॥

(८) **गोविन्दराजः । स इति** । 'प्रतापयुक्तस्तेजस्वी'त्यादिवक्ष्यमाणात् । आदित्यतुल्यव्यापारकरणादसावलौकिकशक्तियोगेन तासु क्रियासु राजाग्निवाय्वादित्यचन्द्रयमवैश्रवणवरुणेन्द्रतुल्यो भवति ॥७॥

(९) **भारुचिः** । एवं चेमे लोकपाला यैरयं राजा तथा तथैव व्यपदिश्यते ॥ ७ ॥

**बालोऽपि नावमन्तव्यो मनुष्य इति भूमिपः ।**
**महती देवता ह्येषा नररूपेण तिष्ठति ॥ ८ ॥**

(१) **मेधातिथिः**। मनुष्योऽयमित्येवं **बालोऽपि** भूमिपो राजा **नावमन्तव्यः**। किं तर्हि? **महती** काचिदेषा **देवतै**तेन मानुषेण रूपेण स्थितेति । अतो दृष्टेनापि दोषेण राजन्यवज्ञा न युज्यते ॥८॥

(२) **सर्वज्ञनारायणः । महती देवता** ईश्वरः ॥८॥

(३) **कुल्लूकः**। ततश्च **मनुष्य** इति बुद्ध्या **बालोऽपि** राजा **नावमन्तव्यः** । यस्मा**न्महती**यं काचि**द्देवता** मानुषरूपेणावतिष्ठते । एतेन देवतावज्ञायामधर्मादयोऽदृष्टदोषा उक्ताः ॥८॥

(४) **राघवानन्दः**। किंच **बालोऽपीति** । अवमानप्रसक्तिमाह **मनुष्य** इति ॥८॥

(५) **नन्दनः**। एवं देवांशप्रभवत्वाद्राजा नावमन्तव्य इत्याह **बाल** इति । **महती देवता** अग्निरित्यर्थः। **हि**शब्दो हेतौ ॥८॥

(८) **गोविन्दराजः**। **बालोऽपीति**। भूपति**र्बालोऽपि** मनुष्यबुद्ध्या नावज्ञेयो यस्माद्देवांशोद्भवत्वा**न्महत्येषा देवता** मनुष्यरूपेणास्ते ॥८॥

(९) **भारुचिः**। यतश्चैतदेवमतः शक्नोति ह्ययं बालोऽप्यमात्यादिभिरकार्यकारिणो निवर्तयितुम् । किञ्चान्यत् ॥८॥

**एकमेव दहत्यग्निर्नरं दुरुपसर्पिणम् ।**
**कुलं दहति राजाग्निः सपशुद्रव्यसंचयम् ॥ ९ ॥**

(१) **मेधातिथिः**। अस्य विधेरर्थवादश्लोका एते। राजधर्मोऽपि सन् सर्वपुरुषार्थोऽयम्। योऽग्निं हस्तादिना स्पृशति, समिद्धस्याप्यन्तिकवर्ती भवति, स **'दुरुपसर्पी'** नरः

प्रमादस्खलितो दह्यते। राजा तु क्रुद्धः सपुत्रधनदारबान्धवं दहति। कुलं – ये केचिद् ज्ञातयः स्वजनाश्च तानप्यपराधसम्बन्धात्पशुभिर्धनसंचयैश्च सह नाशयति ॥९॥

(२) **सर्वज्ञनारायणः** । **दुरुपसर्पिणं** दुष्टेन प्रकारेणोपसर्पन्तमभिभवार्थमग्नेः स्वयमेव तन्मध्ये प्रवेशादिकारिणम् ॥९॥

(३) **कुल्लूकः** । संप्रति दृष्टदोषमाह **एकमित्यादि** । योऽग्नेरतिसमीपमनवहितः सन्नुपसर्पति **दुरुपसर्पिणमेकमेवाग्निर्दहति** न तत्पुत्रादिकं, क्रुद्धो राजाग्निः पुत्रदार-भ्रात्रादिरूपं **कुलमेव** गवाश्वादिपशुसुवर्णादिधनसंचयसहितं सापराधं निहन्ति ॥९॥

(४) **राघवानन्दः** । महत्त्वमेवाह **एकमिति** । **दुरुपसर्पिणं** दुःखार्थं मरणाद्युद्यतं **उपसर्पिणं** समीपगामिनम्। राजा तु देशान्तरस्थमपि कुलादिविशिष्टमपि हन्ति। अग्नि-देवतातोऽप्यधिक इति भावः ॥९॥

(५) **नन्दनः** । अग्नितोऽपि राजा दाहशक्तौ विशिष्टतर इत्याह **एकमिति** । **दुरुपसर्पिणां** उपसर्पणानिपुणानां प्रमादादग्नौ पतितमिति यावत्। **कुलं दहति** यस्मात्तस्मान्नावमन्तव्यः ॥९॥

(६) **रामचन्द्रः । एकमेव नरमग्निर्दहति** । कीदृशं नरं ? **दुरुपसर्पिणं** दुष्टेन प्रकर्षेण उपसर्पन्तं विलङ्घयन्तम् ॥९॥

(८) **गोविन्दराजः । एकमिति । अग्निरनुपायसेविनं मनुष्यमेकमेव दहति । राजाग्निः** पुनः पशुधनसमूहसहितं अपराधिसंबन्धिबन्धुवर्गमपि नाशयति। तस्मादसौ नावमन्तव्यो राजाग्निरिव विनाशकत्वान्न च स्नेहातिशयातिदर्शनेन तं प्रत्याश्वसनीयं यस्मात् ॥९॥

(९) **भारुचिः** । यस्मादकार्यकारिणां तत्सहायानां तत्सम्बन्धसम्बन्धानां च कुलं दहति। अतोऽप्यसौ नावमन्तव्यः ॥९॥

**कार्यं सोऽवेक्ष्य शक्तिं च देशकालौ च तत्त्वतः ।**
**कुरुते धर्मसिद्ध्यर्थं विश्वरूपं पुनः पुनः ॥ १० ॥**

(१) **मेधातिथिः** । नैतन्मन्तव्यं बन्धुर्मे राजा सुहृद्वेति। "कस्य राजा भवेन्मित्रं कानि मित्राणि राजनि।" प्रयोजनापेक्षया च शत्रौ मित्रवदाचरन्ति मित्रे शत्रुवत्। तथाऽशक्ताः कंचिदपराधं क्षमन्ते, शक्तिं प्राप्योन्मूलयन्ति। एवं **देशकालावपि** । अतो **धर्मसिद्ध्यर्थं, कार्यसिद्ध्यर्थं** 'विश्वरूपं' कुरुते। क्षणान्मित्रं क्षणेन शत्रुः, नैकरूप एव राजा भवति।

अतो न विश्वसितव्यं राजनि। मैत्र्याद्वाल्लभ्यात्सौजन्याद्वा तत्तुल्यवयोदृष्ट्या न वर्तितव्यम्, अपि तु सर्वदा नयेन द्रष्टव्यः ॥१०॥

(२) **सर्वज्ञनारायणः** । **कार्यं** प्रयोजनं। **शक्तिं** स्वस्य। **देशकालौ** विग्रहादियोग्यौ। **विश्वरूपं** मित्रेऽपि शत्रुतां शत्रावपि मैत्रीं। अतो मित्रमित्यत्र नाविश्वसनीयमित्यर्थः ॥१०॥

(३) **कुल्लूकः** । **स** राजा प्रयोजनापेक्षया **स्वशक्तिं देशकालौ चावेक्ष्य कार्यसिद्ध्यर्थं** तत्त्वतो **विश्वरूपं** बहूनि रूपाणि करोति। जातिविवक्षया बहुष्वेकवचनम्। अशक्तिदशायां क्षमते, शक्तिं प्राप्योन्मूलयति। एवमेकस्मिन्नपि देशे काले च प्रयोजनानु-

रोधेन शत्रुर्वा मित्रं वोदासीनो वा भवति, अतो राजवल्लभोऽहमिति बुद्धया नावज्ञेयः ।।१०।।

(४) **राघवानन्दः**। किंच **कार्यमिति**। **कार्यम**नुग्रहनिग्रहौ। **शक्ति** बाल्ययौवनाद्यनुरूपाम्। **देशो** दूरनिकटादिः। **कालः** सुभिक्षदुर्भिक्षादिः। **अवेक्ष्य** निश्चित्यैव **विश्वरूपं** प्रयोजनानुरूपेण शत्रुमित्रोदासीनतया ।।१०।।

(५) **नन्दनः**। **विश्वरूपं** नानादेवतारूपम् ।।१०।।

(६) **रामचन्द्रः**। **देशकालौ** विग्रहादियोग्यौ ज्ञात्वा **धर्मसिद्धयर्थं पुनः पुनः विश्वरूपं** नानारूपं इन्द्रयमादिरूपं मित्रे शत्रुतां शत्रौ मित्रतां वा कुरुते ।।१०।।

(८) **गोविन्दराजः**। **कार्यमिति**। स राजा प्रयोजनं पर्यालोच्यात्मशक्ति **देशकालौ** च स्नेहवैरकरणोचितैः सम्यगवेक्ष्य शास्त्रव्यवस्थासिद्धयर्थं मित्रशत्रुमध्यस्थतया मुहुर्मुहुर्नाना**विश्वरूपं कुरुते** ।।१०।।

(९) **भारुचिः**। अतश्चासौ वाल्लभ्यान्मैत्र्यात्स्वाजन्यद्वारेण वा नावमन्तव्यः। अतश्चास्य सम्यगुपचरितस्य. . .।।१०।।

**यस्य प्रसादे पद्मा श्रीर्विजयश्च पराक्रमे।**
**मृत्युश्च वसति क्रोधे सर्वतेजोमयो हि सः ।। ११ ।।**

(१) **मेधातिथिः**। प्रसन्न आराधनया श्रियं **ददाति**। क्रुद्धो मृत्युना योजयति। अतः श्रीकामेनाराधनीयः। न केवलं श्रिया योजयति, यावदस्य शत्रवः सन्ति तानपि पराक्रम्य परितोषितो हन्ति। अतः शत्रुवधकामेन यथावत्परिचरणीयः।

**पद्मा श्री**पर्यायोऽपि **पद्मा**शब्दो महत्त्वप्रतिपादनार्थः प्रयुक्तः, महतीं श्रियं ददातीत्यर्थः। एते चार्था राज्ञः प्राप्यन्ते। यतः **सर्वतेजोमयो**ऽसौ अग्न्यादित्यचन्द्रमसां तेजो बिभर्ति ।।११।।

(२) **सर्वज्ञनारायणः**। यस्य प्रसाद इत्यादि त्रयं क्रमात्कुबेरशक्रयमानां व्यापारकथनम्। **पद्मा** पद्महस्ता। यतः पद्मादयस्तदुद्भवा अतः **सर्वतेजोमयः**। एवमन्येष्वप्युक्तांशेषु व्यापारो ज्ञेय इत्याशयः ।।११।।

(३) **कुल्लूकः**। **पद्मा**शब्दः **श्री**पर्यायोऽपि महत्त्वविवक्षयाऽत्र प्रयुक्तः। **यस्य प्रसादान्महती श्रीर्भ**वत्यतः श्रीकामेन सेव्यः। यस्य शत्रवः सन्ति, तानपि संतोषितो हन्ति। तेन च शत्रुवधकामेनाप्याराधनीयः। यस्मै क्रुध्यति तस्य मृत्युं करोति, तस्माज्जीवनार्थिना न क्रोधनीयः। यस्मात्सर्वेषां सूर्याग्निसोमादीनां तेजो बिभर्ति ।।११।।

(४) **राघवानन्दः**। विश्वरूपत्वं व्यनक्ति **यस्येति**। प्रसादेऽनुग्रहविषये **पद्मा श्री**रिति पर्यायत्वेऽपि महत्त्वानपायत्वख्यापनार्थं पद्मालयत्वसूचनेन वा सुखहेतुत्वं ख्यापितम्। श्रियः सत्वेऽपि नृणामसंतुष्टे राजनि सुखादर्शनात्। **पराक्रमे** शत्रुं प्रतिगमने **विजय**स्तत्संभावना। तदवमानात्तत्क्रोधानन्तरं प्रजामृत्युदर्शनान्मृत्युः। तस्माच्छ्रीप्राप्तिः शत्रुजयशत्रुवधादिकामैर्नृपः सेव्य इति ध्वनिः ।।११।।

(५) **नन्दनः**। अत्रोदाहरणमाह **तस्येति**। तस्य **प्रसादे श्रीर्वसति** तस्य **प्रसादे** सति लक्ष्मीर्जायत इत्यर्थः। **पद्मा** पद्मवती। **विजय** इंद्रः। **सर्वतेजोमयः** सर्वदेवताशक्तिमयः ।।११।।

(८) **गोविन्दराजः । यस्येति** । यस्मादसावग्न्याद्यंशोद्भवत्वादग्न्यादिसर्वतेजोयुक्तस्तस्मात्तद्गतायां प्रसन्नतायां महती **श्रीर्वसति** । एवं च श्रीकामेनासौ आराधनीयो वीर्ये तदा ॥११॥

(९) **भारुचिः** । अतो न केवलमसौ भयात् प्रत्यवायपरिहारार्थमाराध्यः । अभ्युदयोऽपि हि तस्मात् सम्यगुपचरितात् विशिष्टो भवति । अतश्चैव च सति ॥११॥

**तं यस्तु द्वेष्टि संमोहात्स विनश्यत्यसंशयम् ।**
**तस्य ह्याशु विनाशाय राजा प्रकुरुते मनः ॥ १२ ॥**

(१) **मेधातिथिः** । प्रत्यवायाद्यथा नश्यति जनो नैवमभिप्रेतार्थलोभेनातः पुनःपुनराह । **तं** राजानं **यो द्वेष्टि,** प्रातिकूल्येन वर्तते तस्मिन्, स **त्वसंशयं नश्यति । तस्य ह्याशु विनाशाय** । अन्यः कश्चिदपराधं क्षमते अशक्यराजनिवेदनेन । तत्र व्यवहारभागस्य धनपरिक्षयो भवति । भूतोऽप्यर्थः साक्षिणां चित्तवैचित्र्यादन्यथात्वमायाति – इत्यपेक्षमाणः कश्चित्क्रमेणापि । राजा तद्विनाशार्थमपराधेन मनसि स्थितेन बाध्यत एवासौ शक्तिमत्त्वाद्राज्ञः प्रयतमानस्य स्वतन्त्रविरोधापत्तेः ॥१२॥

(२) **सर्वज्ञनारायणः** । तस्मात्तत्र द्वेषोऽपि न कर्तव्य इत्यर्थः ॥१२॥

(३) **कुल्लूकः** । तं राजानमज्ञतया **यो द्वेष्टि** तस्याप्रीतिमुत्पादयति **स** निश्चितं राजक्रोधान्नश्यति यस्मात्**तस्य विनाशाय** शीघ्रं **राजा मनो** नियुङ्क्ते ॥१२॥

(४) **राघवानन्दः** । नापि राज्ञा द्वेषाद्याचरणीयमित्याह **तं यस्त्विति । विनश्यती**त्यत्र हेतु**स्तस्येति** ॥१२॥

(५) **नन्दनः । हिर्हेतौ । विनाशाय** विनाशं कर्तुम् **प्रकुरुते**ऽध्यवस्यति ॥१२॥

(६) **रामचन्द्रः । संमोहाद्यस्तं द्वेष्टि तस्य ह्याशु विनाशाय राजा मनः कुरुते** ॥१२॥

(८) **गोविन्दराजः । तमिति** । यो मनुष्यस्तद्वीर्यातिशयानभिज्ञतया तस्य प्रतिपक्षी भवति स निःसंशयं विनश्यति । यस्मात्तस्य समनन्तरं विनाशार्थं राजा मनः संकल्पयति ॥१२॥

(९) **भारुचिः** । यथोक्तमुपदेशमपरिगणय्य पौनःपुन्येन यतस्तन्न द्विष्यादन्यथार्थापराधं च येन । अन्यस्तु द्विष्यमाणः कदाचिद्धर्मापेक्षया शक्त्या वा सहेत । राज्ञः पुनः सहमानस्य स्वतन्त्रविरोधः । यतोऽशक्तश्चासौ निग्रहणं कर्तुमिति । अतः सदानुवर्तितव्यः निरुपधैः सद्भिः ॥१२॥

**तस्माद्धर्मं यमिष्टेषु स व्यवस्येन्नराधिपः ।**
**अनिष्टं चाप्यनिष्टेषु तं धर्मं न विचालयेत् ॥ १३ ॥**

(१) **मेधातिथिः** । यतः सर्वतेजोमयो राजा तस्माद्धेतो**रिष्टेषु** वल्लभेषु मन्त्रिपुरोहितादिषु कार्यगत्या **धर्मं** कार्यव्यवस्थां शास्त्राचाराविरुद्धां **व्यवस्ये**न्निश्चित्य स्थापयेन्न **विचालयेत्** । सा तादृशी राज्ञोऽनुज्ञा नातिक्रमणीया । 'अद्य पुरे सर्वैरुत्सवः कर्तव्यः । मन्त्रिगेहे विवाहो वर्तते । तत्र सर्वैः संनिधातव्यम् । तथा पशवो नाद्य सैनिकैर्हन्तव्याः । न

शकुनयो बन्धयितव्याः । नर्तिका धनिकैराराधनीया एतावन्त्यहानि ' ।
**एवमनिष्टेष्वपि**। ' एतेन संसर्गो न कर्तव्यः। एतस्य गृहे प्रवेशो न देयः '।

एवंविधोऽत्र धर्मः पटहघोषादिना राज्ञाऽऽदिष्टो नातिक्रमणीयः। न त्वग्निहोत्रादि-धर्मव्यवस्थायै वर्णाश्रमिणां राजा प्रभवति । स्मृत्यन्तरविरोधप्रसङ्गात् । अविरोधे चास्मिन्विषये वचनस्यार्थवत्त्वात् ॥१३॥

(२) **सर्वज्ञनारायणः** । **यं** धर्मव्यवहार**मिष्टेषु** क्षुद्रेष्वप्यक्षुद्रयोग्यं नियमयेदेवं महत्स्वप्यनिष्टेषु क्षुद्रयोग्यं ननु दण्डादिनियमोऽपि राज्ञ इच्छया कार्यस्तस्य शास्त्रीयस्यैव राज्ञापि कार्यत्वात् ॥१३॥

(३) **कुल्लूकः**। यतः सर्वतेजोमयो नृपतिस्तस्मादपेक्षितेषु **यमिष्टं** शास्त्रानुष्ठेयं शास्त्राविरुद्धं निश्चित्य व्यवस्थापयत्यनपेक्षितेषु **चानिष्टं** नियमं नातिक्रामेत् ॥१३॥

(४) **राघवानन्दः**। प्रकरणमुपसंहरति **तस्मादिति**। **इष्टेषु** प्रियेषु **धर्मं** अयमेव-मर्हत्ययमेवं नार्हतीति **व्यवस्थाप**येत्। स्थापयितुस्तं **प्रौढचादिना न चालयेत्** यतः क्रुद्धो हन्ति प्रसन्नोऽनुगृह्णीयात् ॥१३॥

(५) **नन्दनः** । **इष्टेष्वनिष्टेषु** च **यमर्थं** धर्मादनपेतत्वेन निश्चिनोति **तमर्थं धर्मं** मत्वा **न विचालयेत्** ॥१३॥

(६) **रामचन्द्रः**। तस्मात्कारणात् **इष्टेषु** क्षुद्रेषु यं **धर्मं** स **नराधिपः व्यवस्येत्** निश्चिनोति च पुनः **अनिष्टं** अयोग्यं **अनिष्टेषु** अच्छिद्रेषु अनिन्द्येषु तं धर्मं न विचार(ल)येत् ॥१३॥

(८) **गोविन्दराजः**। यत एवं तस्माद्**धर्ममिष्टेषु वर्तयेत्तं नराधिप** इति। तस्मान्नरेश्वर आत्मवल्लभेषु शास्त्राविरुद्धायां दृष्टार्थायां व्यवस्थामिष्टानामेषां वर्तितव्यं इति निश्चिनुयात्। एवमप्रियेष्वपि यच्छास्त्राविरुद्धं बहिष्करणीयादींश्चौतां व्यवस्थां नातिक्रमेत् ॥१३॥

(९) **भारुचिः**। 'तस्मात् सर्वं यमिष्टेषु व्यवस्यति नराधिपः। अनिष्टं चाप्यनिष्टेषु तद्धर्मं न विचारयेत् ॥' न हि राजा वर्णाश्रमधर्मप्रवृत्तौ हेतुः । शास्त्रलक्षणत्वाद्धर्माधर्म-योर(प्य?)वस्था चैवं स्यात् । व्यवस्थाकारिणा च शास्त्रेण भवितव्यम् । तथाच बहुक्तत्वस्तदुक्तिः। तद्विरोधश्चान्याय्यो यतः प्रकरणाद् राजस्तुतिपरमेतत् प्रत्यवगन्तव्यम्। लौकिकधर्मापेक्षया वेदं विज्ञेयं शास्त्रम्। समाप्ता राजोत्पत्तिः ॥१३॥

**तस्यार्थे सर्वभूतानां गोप्तारं धर्ममात्मजम् ।**
**ब्रह्मतेजोमयं दण्डमसृजत्पूर्वमीश्वरः ॥ १४ ॥**

(१) **मेधातिथिः**। उक्ता राजोत्पत्तिः। दण्डोत्पत्तिरिदानीमुच्यते । तस्मा इदं **तदर्थम्**। राज्ञः प्रयोजनसिद्धये **दण्डमसृजदीश्वरः** प्रजापतिः। को राज्ञोऽर्थो दण्डेन?

उच्यते । **गोप्तारं सर्वभूतानाम्**। 'गोप्ता' रक्षिता दण्ड एव। न दण्डेन विना राजा रक्षितुं शक्नोति। अतो राजत्वसिद्ध्यर्थ एव दण्डः सृष्टः। **धर्ममात्मजं ब्रह्मतेजो-मयमिति** दण्डस्तुतिः। न यागदानादि 'धर्मः', किं तर्हि? दण्ड एव। न चायं, प्राणधनहारित्वादधर्मो विज्ञेयः, अपि त्वेष एव धर्म आत्मजः शरीरादेव जातः प्रजापतेः।

न च पाञ्चभौतिकः, किं तर्हि ? ब्रह्मणो यत्केवलं तेजस्तेन निर्मितः। 'पूर्वं' राजसृष्टेः ॥१४॥

(२) **सर्वज्ञनारायणः**। **तस्यार्थे** राजार्थं। **धर्मं** धर्मांशोद्भवं विधिं। स्वस्य सुतं अत एव ब्रह्मतेजोमयं ब्रह्मणस्तेजसा सृष्टम्। **दण्डं** दमकम्। **ईश्वरो** ब्रह्मा ॥१४॥

(३) **कुल्लूकः**। **तस्य** राज्ञः प्रयोजनसिद्धये सर्वप्राणिनां रक्षितारं धर्मस्वरूपं पुत्रं ब्रह्मणो यत्केवलं तेजस्तेन निर्मितं न पाञ्चभौतिकं देहं ब्रह्मा पूर्वं सृष्टवान् ॥१४॥

(४) **राघवानन्दः**। **तस्य** राज्ञोऽर्थे रक्षणादिप्रयोजनार्थं सर्वभूतानामनुशासनरूपं धनप्राणधिक्शब्दहस्ताद्याहरणात्मकं धर्मं तद्धेतुत्वात्। आत्मजं ब्रह्मणस्तेजसा निर्मितं **ब्रह्मतेजोमयं पूर्वं च** राजसृष्टेः। दण्डमिति कर्तृकरणव्युत्पत्त्या क्वचिद्राजा क्वचिदनुशासनम् ॥१४॥

(५) **नन्दनः**। अथ राज्ञः सहायं दण्डं प्रस्तौति **तस्येति**। तस्यार्थे **तस्य** राज्ञः कार्ये निमित्ते **गोप्तारं** गुप्तिं करिष्यन्तं सर्वभूतधर्मगुप्त्यर्थमिति यावत्, **ब्रह्मतेजोमयं** परमात्मशक्तिमयं परमात्मशक्तिमुपादायेति यावत्, **धर्मात्मकं** दण्डमसृजत् **धर्मं** स्वस्माद्दण्डरूपेण ससर्ज। **पूर्वं** युगारम्भे। **ईश्वरः** प्रजापतिः। एतदुक्तं भवति—दण्डस्यात्मा धर्मशरीरं ब्रह्मतेजोमयमीश्वरो जनयितेति ॥१४॥

(६) **रामचन्द्रः**। तस्यार्थे राज्ञोऽर्थे ईश्वरः **ब्रह्मा** पूर्वं दण्डरूपात्मजं पुत्रमसृजत् ॥१४॥

(८) **गोविन्दराजः**। **तदर्थमिति**। राज्ञः प्रजापालनस्य प्रयोजनसिद्ध्यर्थं सर्वप्राणिनां च रक्षितारं चौराद्युपद्रवसंरक्षणेन च सम्यक्कर्वर्मघटनाद्धर्मं स्वशरीराच्चोद्भूतं ब्राह्मणस्य यत्तेजस्तेन निर्मितं दमनाद्दण्डं पूर्वं प्रजापतिः सृष्टवांस्तं विना राजत्वानुपपत्तेः ॥१४॥

(९) **भारुचिः**। अधुना तत्सहकारी दण्डो व्याक्रियते इतआरभ्य द्वादश श्लोकाः दण्डोत्पत्त्यर्थाः। दण्डनामानं तेजोमयं सर्वभूतगोप्तारं धर्ममात्मजमसृजत् पूर्वं राजोत्पत्तेः। एतदुक्तं भवति – दण्डादृते राजत्वं नास्ति. . .सृजनेन राजा प्रजा रक्षिष्यतीति। यतश्च. . .॥१४॥

**तस्य सर्वाणि भूतानि स्थावराणि चराणि च ।**
**भयाद्भोगाय कल्पन्ते स्वधर्मान्न चलन्ति च ॥ १५ ॥**

(१) **मेधातिथिः**। **तस्य** दण्डस्य **भयात्**। सम्बन्धिमात्रविवक्षायां भयहेतुत्वं नास्तीति षष्ठी। दण्डभयात्**स्थावराणि भूतानि भोगाय** फलकुसुमच्छायादिभिर्भोगार्थं **कल्पन्ते**, तत्समर्था भवन्ति। यो हि स्थावरः फलं न ददाति स परिशोष्यते। न चेत्परिशुष्यति, सर्वतो व्याप्तदेशत्वाच्छित्त्वांऽगारीक्रियते।

एतया वृक्षोपमया दण्डचस्य राजापथ्यकारिणः पुरुषस्यैवं कर्तव्यम्, छेदनमूलोत्पाटनादिना दण्डः प्रणेयः। स्थावरग्रहणं स्तुत्या दृष्टान्तार्थमीदृशोऽयं दण्डो यत्स्थावरा अपि दण्डचन्ते, किं पुनश्चराः। न तु स्थावराणां दण्डोऽयमित्येषा बुद्धिरस्ति। **स्वधर्मान्न चलन्ति** अकाले न पुष्प्यन्ति न प्रसुवते ॥१५॥

(२) **सर्वज्ञनारायणः**। **भोगाय कल्पन्ते** अन्येषां। 'स्थावराणी'त्युक्तं स्थावराणामपि पृथिव्यादीनां पृथ्वादिभिर्दण्डस्य धृतत्वात् ॥१५॥

(३) **कुल्लूकः**। **तस्य** दण्डस्य भयेन चराचराः सर्वे प्राणिनो भोगं कर्तुं समर्था भवन्ति। अन्यथा बलवता दुर्बलस्य धनदारादिग्रहणे तस्यापि तदपेक्ष्य बलिनेति कस्यापि भोगो न सिध्येत्, वृक्षादीनां स्थावरादीनां छेदने भोगासिद्धिः। तथा सतामपि नित्य-नैमित्तिकस्वधर्मानुष्ठानमकरणे याम्ययातनाभयादेव ॥१५॥

(४) **राघवानन्दः**। किंच **तस्येति**। **भयाद्**दण्डस्येत्यन्वयः। **भोगाय कल्पन्ते** समर्थाः चोराद्युपद्रवराहित्यात्। भृशदण्डस्य देशेऽधर्माभावाद्यथाकालं स्थावराणि द्रुमादयः फल-शालिनीति भावः। **तस्य** राज्ञो **भोगाय** फलदानि भवन्ति, दण्डाद्यभावे छिद्यन्ते तानि। साधवः पाल्यन्ते दस्यवश्छिद्यन्त इति **मेधातिथिः** ॥१५॥

(५) **नन्दनः**। दण्डं प्रशंसति **तस्येति**। **तस्य** दण्डस्य भयात्। स्थावराणामपि दण्डो धारितो महात्मभिरितिहासेषु श्रूयते। यथागस्त्येन विन्ध्यस्य यथा वासुना शाल्म-लीतरोर्हैमवतस्य ॥१५॥

(६) **रामचन्द्रः**। **तस्य** राज्ञो **भयात्स्वधर्माद्**भूतानि **न चलन्ति** ॥१५॥

(८) **गोविन्दराजः**। **तस्येति**। 'अन्तःसंज्ञा भवन्त्येते' इति स्थावराणामपि चैतन्य-स्योक्तत्वात् छेदनादिदण्डभयेन वृक्षादिस्थावराण्यपि फलपुष्पादिद्वारेणोपभोगार्थं सम्पद्यन्ते नियतकालं पुष्पादिदानव्यवस्थां नातिक्रामन्ति किं पुनर्जङ्गमानि ॥१५॥

(९) **भारुचिः**। अतश्चासौ युक्तो राजसाहाय्ये यस्य. . .दिभिर्भोगाय कल्पन्ते किं पुनरन्ये। यो हि स्थावरो वृक्षो न भोगाय कल्पते नियतमसौ तस्य परिशोधनाद्यारभते यतश्च न परिशुद्धचते। हित्वासावङ्गा. . .यश्च प्रतिकूलं वर्तते तस्य छेदन-मूलोत्पाटनादिभिः दण्डः प्रणीयत एव ॥१५॥

**तं देशकालौ शक्तिं च विद्यां चावेक्ष्य तत्त्वतः।**
**यथार्हतः सम्प्रणयेन्नरेष्वन्यायवर्तिषु ॥ १६ ॥**

(१) **मेधातिथिः**। अन्यायवर्तिनो ये राजापथ्यकारिणो महामात्यादयस्तेषामर्थं दण्ड उच्यते। अन्येषां तु परस्परव्यवहारिणाम् 'अनुबन्धं परिज्ञाये' (८/१२६) त्यत्रोच्यते। तत्रैव चायं श्लोको व्याख्यातः। **विद्या**ऽत्राधिका, सा च वेदार्थविषया। **यथार्हतः** यथार्हं यो यस्य योग्य इत्यर्थः। **सम्प्रणयेत्** प्रवर्तयेत्कुर्यादिति यावत्।

एतत्सर्वमवेक्ष्य निरूप्य तत्तदपेक्षो दण्डः कर्तव्यः। अन्यथाप्रणीतो राज्ञो दृष्ट-मनर्थमावहेत्।

दृष्टादृष्टभेदेन स्वप्रकृतिजनपदभेदेन सप्तमाष्टमयोर्दण्डमातृकाश्लोकयोर्भेदः ॥१६॥

(२) **सर्वज्ञनारायणः**। देशकालादि त्वरण्यरात्र्यादिकृतत्वेन दण्डाधिक्यात्। शक्तिं धनदाने। विद्यामिति वेदादिपाठशीलतया दण्डाल्पतार्थम् ॥१६॥

(३) **कुल्लूकः**। **तमित्यादि**। **तं** दण्डं देशकालौ दण्डचस्य च **शक्तिं** विद्यादिकं यस्मिन्नपराधे यो दण्डोऽर्हतीत्यादिकं शास्त्रानुसारेण तत्त्वतो निरूप्यापराधिषु **प्रवर्त-येत्** ॥१६॥

(४) **राघवानन्दः**। कष्टं तत्प्रणयनमित्याह **तमिति**। **दण्डस्य देशकालौ** शास्त्रानु-सारेणा**वेक्ष्य यथार्हतः** यस्मिन्नपराधे यो यं दण्डमर्हति तदनतिक्रमेण **संप्रणयेत् देशं**

दूरनिकटादिं। **कालं** दुर्भिक्षादि। **विद्यामस्त्र**शिक्षादिकां वेदविद्यां च। **अन्यायवर्तिष्व**-न्यथागामिषु ॥१६॥

(५) **नन्दनः**। **तस्य** दण्डस्य प्रणयनप्रकारमाह **तमिति**। **शक्तिः** बालो वृद्धो दरिद्रो धनवानित्यादिरूपा। **विद्या** वेदवित्त्वमित्यादिरूपा ॥१६॥

(६) **रामचन्द्रः**। दण्डमन्यायवर्तिषु देशकालादिकम**वेक्ष्य यथार्हतः संप्रणयेत्** ॥१६॥

(८) **गोविन्दराजः**। तस्मात् **तमिति**। तं दण्डं ग्राम्यारण्यादिदिवानक्ताद्य-पराधकत्वाद्रजकत्वस्य गतदेशकालौ विचार्य अपराधिसम्बन्धि च शरीरधनसामर्थ्यं वेदाध्य-यनादि सम्यगवेक्ष्य अन्यायकारिषु नरेषु अपराधानुरूपं कुर्वीत इत्यमात्यादिविषयमिदं व्यवहारिणा प्रभवन्तं'अनुबन्धं परिज्ञाये'(८/१२६)ति वक्ष्यमाणत्वात् ॥१६॥

(९) **भारुचिः**। ग्रामारण्यबाह्याभ्यन्तररथ्यादिर्देशः, दिवा नक्तं बालो युवा स्थविर इति कालः। (शक्तिः) शरीरगतार्थगता च, विद्या त्रयी साङ्गोपाङ्गा। एतदक्षया दण्डः प्रणेयः। अन्यथा प्रणीतोऽनर्थमुत्पादयति, अर्थं च न करोतीति दण्ड-स्तुत्यर्थोऽयमनुवादः। दण्डपातनविधिं तूपरिष्टाद्वक्ष्यति 'अपराधं प्रतिज्ञाये'ति ॥१६॥

**स राजा पुरुषो दण्डः स नेता शासिता च सः।**
**चतुर्णामाश्रमाणां च धर्मस्य प्रतिभूः स्मृतः ॥ १७ ॥**

(१) **मेधातिथिः**। **स** एव वस्तुतो **राजा**। तस्मिन्सति राजशक्तिः। स एव **पुरुषः**। येन बलीयसोऽपि पुरुषान् स्त्रीवन्न्यक्कृत्य वशीकरोति। **स नेता**। कार्याणि तेन नीयन्ते। **शासिता**। शासनं राजाज्ञा, तस्याः शासनीभावः दण्डे सति। धर्मतः कर्तृत्व-मौपचारिकम्।

**चतुर्णामाश्रमाणां** यो धर्मस्तत्र **प्रतिभूरिव**। यथा प्रतिभूश्चलितं न ददाति, तद्व-द्दण्डोऽपि ॥१७॥

(२) **सर्वज्ञनारायणः**। स दण्ड एव राजा, जनस्य तदधीनत्वात्। **पुरुषः** पुरुषात्मा। **नेता** नायकः प्रवर्तकः। शासिता एवं कुर्वित्युपदेष्टा। **धर्मस्य** धर्माचरणं कारयितुं **प्रतिभूरिव** ॥१७॥

(३) **कुल्लूकः**। **स** एव **दण्डो** वस्तुतो **राजा**। तस्मिन्सति राजशक्तियोगात्, स एव पुरुषस्ततोऽन्ये स्त्रिय इव तद्विधेयत्वात्। स एव **नेता** तेन कार्याणि नीयन्ते प्राप्यन्ते। स एव **शासिता** शासनमाज्ञा तद्दातृत्वात्। स एव **चतुर्णामप्याश्रमाणां** यो धर्मस्तस्य संपादने प्रतिभूरिव **प्रतिभूर्मुनिभिः स्मृतः** ॥१७॥

(४) **राघवानन्दः**। दण्डं विना राजाऽकिंचित्कर इति दण्डं स्तौति **स इति** त्रिभिः। तस्मिन्सति राजशक्तिः। **पुरुषः** सर्वान् राजप्रभृतीन् स्त्रिय इव न्यक्कृत्य स्वधर्मे स्थापयतीति पुरून् बहून् धनाद्यादानेन स्यति तनूकरोतीति वा राज्ञोऽपि दण्डश्रुतेः। नयति प्रापयति स्वस्वधर्मं राजानेति **नेता** एधांसि पचन्तीतिवद्वा कर्तृत्वोपचारः। प्रमादात्प्रच्याव्य सर्वान् शास्त्रानुसारेण शास्तीति **शासिता**। संन्यासिनामपि पातित्ये 'दास आमरणान्तिक' इति राजभृत्यतास्मृतेराश्रमचतुष्टयग्रहः। **धर्मस्य प्रतिभूः** तत्संपादने प्रभुर्द्वितीयः ॥१७॥

(५) **नन्दनः**। पुनरपि श्लोकद्वयेन दण्डस्तुतिमाह **स इति**। **स** दण्ड एव राजपुरुषः राजनियोगकरः । नेता तत्तत्कामानुष्ठापकः । **शासिता** आज्ञापकः । तेजो विना सकलकार्यासिद्धेः ॥१७॥

(८) **गोविन्दराजः। स इति**। दण्डहेतुत (स्त) त्र द्रोहत्वस्य स दण्ड एव राजा स एवमनेनैव न्यायेन स एव पुरुषोऽपराध्यानेता स एव च नेता दण्डनायकः सेनापत्यादिः स एव चानुशासिता धर्माधिकृतो राजस्थानीयः स एव चतुर्णामपि ब्रह्मचर्या(द्या)–श्रमाणां धर्मानुष्ठाने प्रतिभूरिवानुस्थापकत्वात् स्मृतः ॥१७॥

(९) **भारुचिः**। दण्ड एव राजा तन्निमित्तत्वाद्राजत्वस्य, स एव पुरुषः। (यो) न बलीयसोऽपि पुरुषान् स्त्रीवश्यं कृत्वा वशमानयति स नेता। यस्मात्तद्भयादेव कार्याणि सम्यङ्नीयन्ते स एव शासिता। येन तदपेक्षयैव चासनं शासनीभवति स एव च प्रतिभू-र्वर्णाश्रमव्यतिक्रमे प्रतिभूरिव प्रतिभूः ॥१७॥

**दण्डः शास्ति प्रजाः सर्वा दण्ड एवाभिरक्षति।**
**दण्डः सुप्तेषु जागर्ति दण्डं धर्मं विदुर्बुधाः ॥ १८॥**

(१) **मेधातिथिः**। न राजा शास्त्रं **शास्ति** कर्तव्याकर्तव्ययोर्विधिनिषेधयोः। किं तर्हि? दण्ड एव।

**दण्ड एवाभिरक्षति** बलवद्भ्यो दुर्बलान्। सुप्तेषु राजपुरुषेषु दण्डभयादेव न यथाकामं लोको व्यवहरति। द्विविधो दण्डो राजदण्डो यमदण्डश्च ॥१८॥

(२) **सर्वज्ञनारायणः**। यतः शास्तारो रक्षन्ति। तथाऽन्येषु रक्षितृषु सुप्तेष्वप्ये-तद्भयादेव न पापं क्रियते ॥१८॥

(३) **कुल्लूकः**। यस्माद्दण्डः सर्वाः प्रजा आज्ञां करोति तस्मात्साधूक्तं शासितेति ज्ञेयम्। यस्मात् स एव प्रजा रक्षति ततो युक्तमुक्तं राजेति। निद्राणेष्वपि रक्षितृषु दण्ड एव जागर्ति; तद्भयेनैव चौरादीनामप्रवृत्तेः। दण्डमेव धर्महेतुत्वाद्धर्मं जानन्ति। कारणे कार्योपचारः, ऐहिकपारत्रिकदण्डभयादेव धर्मानुष्ठानात् ॥१८॥

(४) **राघवानन्दः**। किंच **शास्तीति**। **अभिरक्षति** प्रमादादधर्मेभ्यः। **सुप्तेषु** प्रमत्तेषु ॥१८॥

(६) **रामचन्द्रः**। दण्डः सुप्तेषु जागर्ति दण्डभयात्केऽपि न लुम्पन्ति ॥१८॥

(८) **गोविन्दराजः**। यत एवं तस्माद्दण्ड **इति**। दण्डभयादेव राजादिशासनं प्रजानां निवर्तते। अतो दण्ड एव सर्वाः प्रजाः कर्तव्या (दिषु) इति तु स्थापयति न राजा शास्त्रं वा दण्ड एव चासाधुभ्यः साधून् रक्षति सुप्तेषु चापि रक्षयितृषु दण्ड एव जागर्ति तद्भयादेव चौरादीनां अप्रवृत्तेर्दण्ड(मे) एव धर्मं विद्वांसो मन्यन्ते ऐहिकामुत्रिकदण्डभयाद्धर्मप्रवृत्तेः ॥१८॥

(९) **भारुचिः**। यतश्चैवमतः न शास्त्रं राजा वा शास्ति। सत्यपि च शास्त्रे राजनि च दण्डभयादेव शासनमनुवर्तन्ते वर्णाश्रमिणः। एवं च स एवाभिरक्षति। अकार्यकारिभ्य इतरान्, सुप्तेष्वपि च राजपुरुषेष्वैहिकभयात् परलोकभयाद्वा न यथाकामं प्रवर्तते लोकः ॥१८॥

समीक्ष्य स धृतः सम्यक् सर्वा रञ्जयति प्रजाः।
असमीक्ष्य प्रणीतस्तु विनाशयति सर्वतः ॥ १९ ॥

(१) **मेधातिथिः। धृतः प्रणीतः** प्रवर्तितः। **समीक्ष्य** पूर्वोक्तदेशकालाद्यपेक्ष्य समीक्ष्य। **रञ्जयत्य**नुरागं प्रजासु जनयति। विपरीतं प्रणीयमानो न केवलं स्वकार्यं न करोति यावद्दुरुपयुक्तो विषवद्विनाशयत्यर्थं जनस्य ॥१९॥

(२) **सर्वज्ञनारायणः। समीक्ष्य** शास्त्रतो निरूप्य ॥१९॥

(३) **कुल्लूकः।** स दण्डः शास्त्रतः सम्यङ्निरूप्यापराधानुरूपेण देहधनादिषु **धृतः** सर्वाः प्रजाः सानुरागाः करोति। अविचार्य तु लोभादिना प्रयुक्तः सर्वाणि बाह्यार्थ-पुत्रादीनि नाशयति। सर्वत इति द्वितीयार्थे तसिः ॥१९॥

(४) **राघवानन्दः। समीक्ष्य** यथाशास्त्रं **अनुरञ्जयति** राजानं प्रत्यावर्जयति। **सर्वतः** सराष्ट्रसपशुद्रव्यसंचयं राजानं नाशयतीति भावः ॥१९॥

(५) **नन्दनः। धृतः** धारितः **स** दण्डः ॥१९॥

(६) **रामचन्द्रः। सम्यक् समीक्ष्य धृतः स दण्डः सर्वाः प्रजा रञ्जयति असमीक्ष्या**-विचार्य **प्रणीतः सर्वशो विनाशयति** ॥१९॥

(८) **गोविन्दराजः। समीक्ष्येति।** स दण्डो देशकालादि विचार्य सम्यक् लोभादिपरित्यागेन कृतः सर्वाः प्रजाः सानुरागाः करोति। अविचार्य पुनः कृतो दृष्टादृष्टेभ्यः कर्तारं नाशयति ॥१९॥

(९) **भारुचिः।** नैतावता मुच्यावहे असम्यग्धृतः कार्यं न करोतीति। **यथैव** सम्यग्धृतो रञ्जयति प्रजाः, एवं न सम्यग्धृतः सर्वमेव विनाशयति ॥१९॥

यदि न प्रणयेद्राजा दण्डं दण्ड्येष्वतन्द्रितः।
शूले मत्स्यानिवापक्ष्यन्दुर्बलान्बलवत्तराः ॥ २० ॥

(१) **मेधातिथिः।** अप्रणयनाद्दण्डस्य ये **बलवत्तरा** बलीयांसो बलेनाधिका महाप्राणतया शस्त्रहस्तमनुष्या भूयस्त्वेन वा, ते दुर्बलान**पक्ष्यन् शूले** मत्स्यानिव। यथा मत्स्या शूलाक्रियन्ते भोजनार्थमेवमशक्तो जनोऽधिकशक्तिभिरुपहीयेत, धनशरीरदारहरणादिना। तस्माद्दण्डार्हा**नतन्द्रितो**ऽनलसो दण्डयेत्। 'कुतो मया समीक्षा शक्या कर्तुं, नैव दण्डं करोमीति' नैवं बुद्धिः कर्तव्या ॥२०॥

(२) **सर्वज्ञनारायणः। शूले मत्स्यानिव अपक्ष्यन्** पचेयुः। अविध्यन्निति क्वचित्पाठः ॥२०॥

(३) **कुल्लूकः। यदि राजा**ऽनलसो भूत्वा दण्डप्रणयनं न कुर्यात्तदा **शूले** कृत्वा **मत्स्यानिव** बलवन्तो दुर्बलानपक्ष्यन् लृङन्तस्य पचिधातो रूपमिदम्, बलिनोऽल्पबलानां हिंसामकरिष्यन्नित्यर्थः। शूले मत्स्यानिवापक्ष्यन्नित्येष **मेधातिथिगोविन्दराज**लिखितः पाठः। 'जले मत्स्यानिवाहिंस्यु'रिति **च** पाठान्तरम्। अत्र बलवन्तो दुर्बलान्हिंस्युरिति मत्स्यन्याय एव स्यादित्युक्तम् ॥२०॥

(४) **राघवानन्दः**। दण्डाकरणे दोषमाह **यदीति** त्रिभिः। शूले मत्स्यान् शूलमारोप्यापक्ष्यन्निति क्रियातिपत्तिः। तेन यदि दण्डयिता राजा नाभविष्यत्सर्वाः प्रजाः बलिभिर्दस्युभिरनंक्ष्यन्निति ॥२०॥

(५) **नन्दनः**। अप्रणयने दोषं श्लोकद्वयेनाह **यदीति** ॥२०॥

(६) **रामचन्द्रः**। त्रिभिराह **यदीति**। द्वितीयेनान्वयः। **राजा अतन्द्रितः दण्डयेषु दण्डं यदि न प्रणयेत्** न प्रयोजयेत् तर्हि बलवत्तरः पुरुषो दुर्बलान्पुरुषान् अद्यात् लुम्पेत्। कानिव? **अपक्ष्यन्** शूल आरोपितान्मत्स्यानिव ॥२०॥

(८) **गोविन्दराजः**। **यदीति**। यदि राजाऽनलसो भूत्वा दण्डार्हेषु दण्डं न कुर्यात् यथा शूल्या मत्स्या निषादादिभिर्निर्भयैः शूले पच्यन्ते एवं बलाऽतिशययुक्ता दुर्बलान्पचेयुः ॥२०॥

(९) **भारुचिः**। न केवलं दण्डप्रणीतौ गुणावाप्तिरप्रणीतौ मत्स्यस्य न्यायः प्रवर्तते ॥२०॥

**अद्यात्काकः पुरोडाशं श्वाऽवलिह्याद्धविस्तथा।**
**स्वाम्यं च न स्यात्कस्मिंश्चित्प्रवर्तेताधरोत्तरम् ॥ २१ ॥**

(१) **मेधातिथिः**। श्वकाकादयोऽप्यत्यन्ताधमा देवैः सह संस्पर्धेरन्। देवेभ्यो दातव्यं हविश्चरुपुरोडाशादि तत्ते अद्युर्यदि दण्डेन न निवार्येरन्।

अन्यदपि **यत्स्वाम्यं** स्वस्वामिभावः स न स्यात्। जायापत्योः, पितापुत्रयोः। जायायाः पतिर्न स्यात्स्वातन्त्र्येण स्त्रियः प्रवर्तेरन्।

**अधरोत्तरम्**। यत् 'अधरं' वृषलादि तत् 'उत्तरं' प्रधानं स्यात्। यदुत्तरं ब्राह्मणादि तदवरतां निकृष्टतामियात्। शूद्रा धर्ममुपदिशेयुः, वैदिको धर्मो नानुष्ठीयेत ॥२१॥

(२) **सर्वज्ञनारायणः**। **अद्यात्काकः श्वाऽवलिह्यादिति** दृष्टान्तायोक्तम्। तेन श्वाऽवलिह्यादित्याद्यर्थेषु पूरणीयम्। **अधरोत्तर**मधराणामुत्कृष्टत्वम् ॥२१॥

(३) **कुल्लूकः**। यदि राजा दण्डं नाचरिष्यत्तदा यज्ञेषु सर्वथा हविरनर्हः काकः पुरोडाशमखादिष्यत्तथा कुक्कुरः पायसादिहविरलेक्ष्यन्न कस्यचित्कुत्रचित्स्वाम्यमभविष्यत्ततो बलिना तद्ग्रहणाद्ब्राह्मणादिवर्णानां च मध्ये यदवरं शूद्रादि तदेवोत्तरं प्रधानं प्रावर्तिष्यत ॥२१॥

(४) **राघवानन्दः**। किंच काकश्वानौ दण्डेनानिवारितौ देवभोग्यौ पुरोडाशावश्नीतो यथा तद्वत्स्यात्। तथा कस्मिन् न्यायोपात्तेऽपि वित्ते, कस्यापीति शेषः, दण्डादृते दस्यूनां प्राबल्यात्। अधरोत्तरं ब्राह्मणादिवर्णानां च मध्ये ये अधराः शूद्रादयः ते उत्तरं प्राधान्यं प्रावर्त्स्यन्निति ॥२१॥

(६) **रामचन्द्रः**। राज्ञा अप्रयुक्ते दण्डे कस्मिन्नपि वस्तुनि स्वाम्यं प्रभुत्वं न स्यात्, अधरोत्तरं अधरं प्रतिलोमजं उत्तरं अनुलोमजं एव**मधरोत्तरं प्रवर्तेत** ॥२१॥

(८) **गोविन्दराजः**। **अद्यादिति**। यदि दण्डो नाऽभविष्यत्तदा देवेभ्यः दत्तं अत्यन्तापसदः काकोऽपि पुरोडाशाख्यं हविरात्स्यत् तथाऽत्यन्ताऽधम (मः) श्वापि यवाग्वादि हविरलेक्ष्यत्, न च कस्यचित्कस्मिंश्चित्स्वामित्वं भवेत्। ब्राह्मणक्षत्रियादीनाञ्चोत्कर्षापकर्षवैपरीत्यं प्रवर्तेत ॥२१॥

(९) **भारुचिः**। सर्वे धर्माः। काकश्वादयः ऋद्धिमद्भिः सर्वोत्तमैरपि देवैर्दण्डादृते न शक्यन्ते प्रतिवारयितुम्, किं पुनरन्यः? सुहृन्मित्रस्वजनवचनादिति। एवं च सति दण्डस्य हि भयात् सर्वं जगद् भोगाय कल्पते। प्रायेण सर्वो दण्डजित एव लोकः। येन दुर्लभः स्वभावशुद्धः शासनानुव(र्ती)। तदेतद्दण्डपातनं सद्यः यद्यपि दुःखोत्पा(दकं)तनं तथापि प्रकल्प्यते शास्त्रेण ॥२१॥

**सर्वो दण्डजितो लोको दुर्लभो हि शुचिर्नरः।**
**दण्डस्य हि भयात्सर्वं जगद्भोगाय कल्पते ॥ २२ ॥**

(१) **मेधातिथिः**। स्वभावेनैव प्रकृत्यैव **शुचिः** शुद्धो धर्मार्थकामेषु स तादृशो नरो **दुर्लभः**, दुःखैर्लब्धुं शक्यः। किन्तु **दण्डजितो** दण्डेन जीयते, पथि स्थाप्यते। तद्भयान्न यथाकामं प्रवर्तते। **जगद्भोगायेति** प्रागुक्तमेव ॥२२॥

(२) **सर्वज्ञनारायणः**। **शुचिः** शुद्धमनाः। **भोगाय** भोगिनाम् ॥२२॥

(३) **कुल्लूकः**। **सर्वोऽयं लोको** दण्डेनैव नियमितः सन्मार्गेऽवतिष्ठते। स्वभाव-विशुद्धो हि मानुषः कष्टेन लभ्यते। तथा **सर्वमिदं जगद्दण्डस्यैव भयादावश्यकभोजनादि-रूपेऽपि भोगे समर्थं** भवति ॥२२॥

(४) **राघवानन्दः**। किंच दण्डभयादेव **शुचिर्नरो** न स्वतो रागादित्याह **दण्डस्येत्यादि** पूर्वोक्तस्य निगमनम् ॥२२॥

(५) **नन्दनः**। दण्डप्रणयने हेतुमाह **सर्व इति** ॥२२॥

(८) **गोविन्दराजः**। **सर्व इति**। सर्वः कश्चिल्लोको दण्डेन सन्मार्गे स्थाप्यते तस्मान्निसर्गशुद्धो नरः कृच्छ्रेण लभ्यते। तथा सर्वमिदं जगद्दण्डभयादवश्यकर्तव्योपकाराय प्रवर्तते ॥२२॥

(९) **भारुचिः**। एतद्रूपं मनुष्याणां प्रशस्तमभीष्टं च। अतस्तेनासता रूपं कृत्वा स्तौति। अथवा द्विरूपो दण्डः सुखदो भयदश्चेति। यतस्तं द्वाभ्यां रूपाभ्यां ते... तत्वं च लोकहितार्थत्वेनेति देवतारूपम्। वेदं शास्त्रप्रत्यक्षं, यथाभूतमतोऽनूद्यते। समाप्ता दण्डस्तुतिः ॥२२॥

**देवदानवगन्धर्वा रक्षांसि पतगोरगाः।**
**तेऽपि भोगाय कल्पन्ते दण्डेनैव निपीडिताः ॥ २३ ॥**

(१) **मेधातिथिः**। ये **देवाः** पर्जन्यो वायुरादित्य इत्यादयः। **भोगाय कल्पन्ते** शीतोष्णवर्षैर्नियतैरोषधीः पाचयन्ति तद्दण्डभयाशङ्किनः। अन्यथा किमिति सूर्या-चन्द्रमसौ धातृपर्जन्यौ वा स्वस्मात्कार्यकालान्नियतान्न विचलेताम्? । कदाचिद् द्वे अहनी त्रीणि वा नोदियात्सूर्यः, सति स्वातन्त्र्ये। दण्डात्तु बिभ्यन्नातिक्रामति मर्यादाम्। तथा च श्रुतिः —

"भयात्सूर्यः प्रतपति भयात्तपति चन्द्रमाः। भयादग्निश्च वायुश्चेति" (कठ. ६/३)।

**दानवादयश्च** यदिदमखिलमहर्निशं च जगदुपघ्नन्ति, दण्डमाहात्म्यमेतत्। पतङ्ग-वयांसि गृहमण्डनाः शुकसारिकादयो यद्बालानामक्षिणी नोत्पाटयन्ति श्येनकाककङ्क-

गृध्रादयो यज्जीवतो नादन्ति तदप्येवमेव। **उरगाः** सर्पाः केवलं क्रोधविषात्मकाः संभूय सर्वे न दशन्ति सर्वं प्राणिजातं तद्दण्डसामर्थ्यम्।

अतः स्तुतिरेषोच्यते। यद्देवादयो महर्धिका अचेतना वा स्वमर्यादातो न विचलन्ति भयात्, किं पुनर्मनुष्याः।

अत्र श्लोकः पूर्वैः पठितः।

"दृष्ट्वा तु दैन्यं वनपाटलानां, पुष्पप्रगल्भं कुटजप्रहासम्।

सम्बन्धदानेन तदा जहास, नीचोऽपि रन्ध्रं प्रहरत्यवश्यम्" इति ॥२३॥

(२) **सर्वज्ञनारायणः**। दण्डेनैव परमेश्वरस्य। यदुक्तं 'भीषाऽस्माद्वातः पवत' इति ॥२३॥

(३) **कुल्लूकः**। उक्तमपि दण्डस्य भोगसंपादकत्वं दाढर्चार्थं पुनरुच्यते। इन्द्राग्निसूर्यवाय्वादयो देवास्तथा दानवगन्धर्वराक्षसपक्षिसर्पा अपि जगदीश्वरपरमार्थभयपीडिता एव वर्षादानाद्युपकाराय प्रवर्तन्ते। तथा च श्रुतिः (कठ. ६/३) 'भयाद(त्त)स्याग्निस्तपति भयात्तपति सूर्यः। भयादिन्द्रश्च वायुश्च मृत्युर्धावति पञ्चम' इति ॥२३॥

(४) **राघवानन्दः**। देवदानवेति दृष्टान्तार्थम्। 'भीषाऽस्माद्वातः पवते भीषोदेति सूर्य' (तैत्ति. २/८) इति श्रुतेर्यथेश्वरभयात्पवनादेः प्रवृत्तिरेवं राजप्रभृतेर्भयाद्देवादयोऽपि स्वकार्याय नीयन्ते। यद्वा दण्डपीडिताः दण्डेन या यस्य या पीडा या तया आवर्जिता निष्पापानां तेऽबाधकाः ॥२३॥

(५) **नन्दनः**। देवयोनयोऽपि दण्डसाध्याः किं पुनर्मनुष्ययोनय इत्यत्राह **देवेति** ॥२३॥

(६) **रामचन्द्रः**। दण्डेन ईश्वराज्ञारूपेण ॥२३॥

(८) **गोविन्दराजः। देवदानवरक्षांसि गन्धर्वा इति**। देवादयः प्रथमाध्यायोक्तभेदा पतङ्गा पक्षिण उरगाः सर्पा ये तेऽपि सकलजगदुत्पत्त्यनुशासनकारणरूपेश्वरसम्बंधिभयपीडिताः सन्तो वर्षादानाद्युपकारञ्च दानवादयो न कुर्वन्ति। तथा **चाध्वर्यव**श्रुतिः—"भयादस्याग्निस्तपति भयात्तपति सूर्यः। भयादिन्द्रश्च वायुश्च मृत्युर्धावति पञ्चमः" इति ॥२३॥

(९) **भारुचिः**। एवमीश्वरा अपि सन्तो देवादयोऽनुग्रहोपघाताभ्यां दण्डभयादेवानुग्राह्याननुगृह्णन्ति, उपघात्यांश्चोपघ्नन्ति। यदि च दण्डान्न बिभ्युरैश्वर्याद्यथाकाममभिप्रवर्तेरन्। न च प्रवर्तन्तेऽतो मन्यामहे, देवादयोऽपि दण्डभयादेव सत्यप्यैश्वर्ये यथाकर्मानुग्रहोपघाताभ्यां वर्तन्ते न यथाकाममिति। अतिशयवचनैषा दण्डस्तुतिः ॥२३॥

**दुष्येयुः सर्ववर्णाश्च भिद्येरन्सर्वसेतवः।**
**सर्वलोकप्रकोपश्च भवेद्दण्डस्य विभ्रमात् ॥ २४ ॥**

(१) **मेधातिथिः**। तथा च **दण्डस्य विभ्रमो**ऽकरणमन्यायेन वा करणम्। तस्मिन्सति सर्ववर्णा दुष्येयुः। इतरेतरस्त्रीगमनेन संकरप्रवृत्तेः। **सेतवो** मर्यादाः। ताः सर्वा **भिद्येरन्**। सर्वमर्यादापरिलोपः स्यादित्यर्थः। ब्राह्मणाश्च शूद्रवद्वर्तेरञ्छूद्राश्च ब्राह्मणवत्। अतश्च सर्वलोकप्रकोपः स्यात्। त्रयोऽपि लोका इतरेतरं वृष्टयातपादिना नोपकुर्युः ॥२४॥

(२) **सर्वज्ञनारायणः** । दुष्येयुः संकरादिवैकृत्यकरणेन हेतुना । सेतवो मर्यादाः । प्रकोपोऽन्योन्यवैरम् । **विभ्रमान्**मोहात् ॥२४॥

(३) **कुल्लूकः** । दण्डस्यानाचरणादनुचितेन वा प्रवर्तनात्सर्वे ब्राह्मणादिवर्णा इतरेतरस्त्रीगमनेन संकीर्येरन्, सर्वशास्त्रीयनियमाश्चतुर्वर्गफला उत्सीदेयुः, चौर्यसाहसादिना च परस्यापकारात्सर्वलोकसंक्षोभश्च जायेत ॥२४॥

(४) **राघवानन्दः** । किंच **सर्वसेतवो** वर्णानामाश्रमाणां च । अनेन वर्णेनेदं कर्तव्यमनेनाश्रमेणेदं कर्तव्यमिति धर्ममर्यादाः । **प्रकोपः** संक्षोभः । विभ्रमादकरणाद्विपरीतकरणाच्च ॥२४॥

(५) **नन्दनः** । **सेतवः** मर्यादाः । विभ्रमादसम्यक्प्रणयादप्रणयाच्च ॥२४॥

(६) **रामचन्द्रः** । **दण्डस्य विभ्रमा**द्विस्मरणादन्यथाप्रयोगात्**सर्वे वर्णाः दुष्येयुः** संकीर्णा भवेयुः । **च** पुनः **सर्वसेतवो** मर्यादा **भिद्येरन्** ॥२४॥

(८) **गोविन्दराजः । दुष्येयुरिति** । दण्डस्याकरणादन्यायेन च करणात् सर्वे ब्राह्मणादयो वर्णा इतरेतरस्त्रीगमनेन संकीर्येरन् सर्वा(र्वे)श्च धर्मार्थकाममोक्षार्थाः शास्त्रमर्यादा उत्सीदेयुः । एवं 'चाग्नौ प्रास्ते'त्यादि परस्परोपकाराय प्रवर्तते ॥२४॥

(९) **भारुचिः** । तथा च अधार्यमाणे न्याय्येन दण्डे वर्णनिमित्ता धर्मा दुष्येयुः । ये च धर्मार्थकामसेतवः ते च भिद्येरन् । किं बहुना– कः शक्नोति भगवन्तं दण्डनामानं व्यवस्थाकारिणं बहुगुणत्वात् स्तोतुम् ॥२४॥

**यत्र श्यामो लोहिताक्षो दण्डश्चरति पापहा ।**
**प्रजास्तत्र न मुह्यन्ति नेता चेत्साधु पश्यति ॥ २५ ॥**

(१) **मेधातिथिः** । एतद्द्वयं मनुष्याणां प्रशस्ततमम् । अतस्तेनासता रूपकभंग्या स्तौति । द्विरूपो दण्डः, दुःखदो भयदश्च । भयहेतुत्वं **श्यामतया,** दुःखहेतुत्वं **लोहिताक्ष**त्वेन । परिसमाप्ता दण्डस्तुतिः ।

दण्डोऽवश्यं कर्तव्यः । स च देशाद्यपेक्षयेति । अन्यः सर्वोऽर्थवादः ।

**नेता चेत्**। 'नेता' दण्डस्य नायकः । **स चेत्साधु पश्यति**। सुनिरूपितं देशकालादिकं कृत्वा पालयति । तत्र प्रजा न मुह्यन्ति न केनचिद्दोषेण युज्यन्ते ॥२५॥

(२) **सर्वज्ञनारायणः** । **यत्र श्याम** इति प्रागुक्तपुरुषरूपताकथनम् । **श्यामः** कृष्णः तामसत्वात् । **लोहिताक्षः** रजोधिकत्वेन कोपनत्वात् । साधु युक्तं पश्यति ॥२५॥

(३) **कुल्लूकः** । **यत्र** देशे शास्त्रप्रमाणावगतः **श्याम**वर्णः लोहितनयनोऽधिष्ठातृदेवताको **दण्डो विचरति तत्र प्रजा** व्याकुला न भवन्ति । दण्डप्रणेता यदि विषयानुरूपं सम्यग्जानाति ॥२५॥

(४) **राघवानन्दः** । किंच **श्याम** इत्यादि तदधिष्ठातृदेवतारूपम् । **नेता** राजा शास्त्रानुरूपं **साधु चेत्पश्यति न** तदा **प्रजा मुह्यन्ती**त्यन्वयः ॥२५॥

(५) **नन्दनः** । सम्यक्प्रणयने गुणमाह **यत्रेति** । दण्डाभिमानिनीं देवतां प्रकृत्याधिष्ठेयाधिष्ठात्रोरभेदोपचारादुक्तं **श्यामो लोहिताक्ष** इति । दण्डदेवतायाः श्यामत्वं लोहिताक्षत्वं च महाभारतेऽपि स्मर्यते 'नीलोत्पलदलश्यामश्चतुर्दंष्ट्रश्चतुर्भुजः । अष्टपाद्रक्तनयनः

(४) **राघवानन्दः**। किंच **सर्वेति**। सर्वोपायैः क्वचिद्दानं क्वचिद्भेदः क्वचिद्युद्धं क्वचित्सामेति। अस्य क्षीणस्य राज्ञः 'छिद्रेष्वनर्था बहुलीभवन्ती'ति न्यायान्मित्रमपि बलादिभिः पूर्णं धनलोभेन क्वचिदेनं प्रत्यमित्रः स्यात्, एवमुदासीनेष्वपि ज्ञेयम्। तथा च **व्यासः** 'न कश्चित्कस्यचिन्मित्रं न कश्चित्कस्यचिद्रिपुः। सामर्थ्ययोगाद्विज्ञेया मित्राणि रिपवस्तथेति' ॥१७७॥

(५) **नन्दनः**। अस्मात् स्वस्मादिति यावत् ॥१७७॥

(६) **रामचन्द्रः**। **नीतिज्ञः** यथा अस्य राज्ञः **मित्रोदासीनशत्रवः** अधिका न स्युः **सर्वोपायैस्तथा कुर्यात्** ॥१७७॥

(७) **गोविन्दराजः**। **सर्वोपायैरिति**। नीतिकुशलो राजा सर्वैः सामादिभिरुपायैः तथा यतेत यथाऽस्य मित्रोदासीनशत्रुमध्यमा अधिका न भवन्ति। आधिक्ये हि तेषां सुतरां क्षोभ्यो भवति, धनगर्वेण मित्रस्य शात्रवापत्तेः ॥१७७॥

**आयतिं सर्वकार्याणां तदात्वं च विचारयेत्।**
**अतीतानां च सर्वेषां गुणदोषौ च तत्त्वतः ॥१७८॥**

(१) **मेधातिथिः**। **कार्याणि** कर्मणि प्रयोजनानि। तेषां सर्वेषामारिप्समानानाम**आयतिः** परिणाम्यागामिकालः। **तदात्वं** प्रारंभावस्थावर्तमानकालस्तं च **विचारयेत्**। **तत्त्वतस्**तत्त्वेन। अनेकमुखानि हि कार्याणि क्षणाच्चान्यथा भवन्तीति। तत्र येषामुभौ कालौ न शुध्यतस्तानि कार्याणि कथमारभेतेति तद्विचारार्थोपदेशः। **अतीतानाम**तिक्रान्तानां **च सर्वेषां गुणदोषौ** ततो विचारयेत्। अत्राप्यतीतानां गुणदोषौ विचार्य यानि कर्माणि गुणवन्त्यतीतानि तान्येव कथं नाम पुनरारभेतेत्यतीतकार्यगुणदोषतत्त्वविचारणोपदेश एवमर्थः ॥१७८॥

(२) **सर्वज्ञनारायणः**। **आयति**रागामिफलं। **तदात्वं** वर्तमानं। **अतीतानां च कार्याणां गुणदोषौ** चकारात्स्वरूपं च तच्चिन्तनेन च तत्साम्यादागामिन्यपि प्रवृत्तिर्निवृत्तिर्वा प्रयोजनम् ॥१७८॥

(३) **कुल्लूकः**। सर्वेषां कार्याणामल्पानां बहूनामपि आयतिमुत्तरकालं गुणं दोषं विचारयेत्। वर्तमानकालं च शीघ्रसंपादनाद्यर्थं विचारयेत्। **अतीतानां** च सर्वकार्याणां **गुणदोषौ** किमेषां कृतं विघटितं किं वाऽवशिष्टमित्येवं यथाव**द्विचारयेत्** ॥१७८॥

(४) **राघवानन्दः**। राज्ञः कार्यान्तरं विधत्ते **आयतिमिति**। **आयतिः** उदर्के यत्फलं **तदात्वं** शीघ्रं कार्यसिद्धये वर्तमानकालिकं च फलं। **अतीतानामिति**। दृष्टान्तार्थ एवं पूर्वकृतं तेन जयादिजातमन्यथा पराजयादिजातमिति गुणदोषौ **विचारयेत्** ॥१७८॥

(५) **नन्दनः**। **आयतिं** आगामिफललाभं **तदात्वं** तत्कालफलम्। सर्वेषामर्थानामिति शेषः ॥१७८॥

(६) **रामचन्द्रः**। **सर्वकार्याणां आयतिं** आगामिफलं **तदात्वं** वर्तमानं **अतीतानां सर्वेषां गुणदोषौ** तत्त्वतो **विचारयेत्** ॥१७८॥

(७) **मणिरामः**। **आयतिः** उत्तरकाले गुणदोषं **तदात्वं** वर्तमानकालं च शीघ्रकार्यसंपादनार्थम्। **अतीतानां** सर्वकार्याणां गुणदोषौ किमेषां कृतं विघटितं वा किं वाऽवशिष्टमिति **विचारयेत्** ॥१७८॥

(८) **गोविन्दराजः । आयतिमिति ।** सर्वेषां स्वल्पानामपि कार्याणां आगामिनि काले गुणदोषा इत्येवं विचारयेत् वर्तमानकाले च क्षिप्रसम्पादनार्थं सर्वेषां कार्याणां गुणदोषौ किमेषां कृतं विचारितं किं वाऽवशिष्टमित्येवं यावद्विचारयेत् ॥१७८॥

**आयत्यां गुणदोषज्ञस्तदात्वे क्षिप्रनिश्चयः ।**
**अतीते कार्यशेषज्ञः शत्रुभिर्नाभिभूयते ॥१७९॥**

(१) **मेधातिथिः ।** एवं हि यो **ह्यायत्यामा**गामिनि काले कार्याणां गुणदोषौ विजानाति नियमेनासौ विमृश्यकारीति स्वयं चारभते न सदोषं एवमर्थं हि ज्ञानम् । 'तदात्वे वर्तमाने यः क्षिप्रमवधारयति, कार्ये न विलम्बते, तदात्वे **क्षिप्रनिश्चयः** क्षिप्रकारी भवति, गुणवत्करोति, न दोषवत् ।' **अतीते** कृते सति कार्ये शेषतो यः कार्यमेव बुध्यते न तत्परिसमाप्तौ लभत इति गुणवत्सर्वकार्यफलसंबन्धादभ्यधिकः । **शत्रुभिर्नाभिभूयते ।** न हि धर्मशास्त्रे षाड्गुण्योपदेशः शक्यते कर्तुं दृष्ट इति दिङ्मात्रमुक्तम् ॥१७९॥

(२) **सर्वज्ञनारायणः । गुणदोषज्ञो** भाविगुणदोषविचारकः । **क्षिप्रनिश्चयः** शीघ्रं कार्याकार्यत्वयोर्निश्चेता । **अतीते** दैवाद्विपन्ने कार्ये कार्यशेषस्य तदेकदेशोद्धारोपायस्यापि ज्ञाता ॥१७९॥

(३) **कुल्लूकः ।** यस्मात् **आयेति । यः** कार्याणामागामिकगुणदोषज्ञः स गुणवत्कार्यमारभते दोषवत्परित्यजति । यश्च वर्तमानकाले क्षिप्रमेवावधार्य कार्यं करोति **अतीते कार्ये यः कार्यशेषज्ञः** स तत्कार्यसमाप्तौ तत्फलं लभते यस्मादेवंविधकालत्रयसावधानत्वान्न कदाचिच्छत्रुभिरभिभूयते किं बहुना ॥१७९॥

(४) **राघवानन्दः ।** विचारे किं स्यात्तत्राह **आयत्यामिति ।** आयत्यां गुणदोषज्ञो यतो विमृश्यकारी **क्षिप्रनिश्चय**श्चादीर्घसूत्री **अतीते** कृते दक्षिणादिदानवदवशिष्टसमापयिता स नाभिभूयते शत्रुभिरित्यन्वयः ॥१७९॥

(५) **नन्दनः ।** विचारस्य फलमाह **आयत्यामिति** ॥१७९॥

(६) **रामचन्द्रः । आयत्यां गुणदोषज्ञः तदात्वे** वर्तमाने **क्षिप्रनिश्चयः अतीते कार्यशेषज्ञः** दैवाद्विपन्ने कार्यशेषस्य तदेकदेशोद्धारोपायस्य ज्ञाता एतादृशो राजा **शत्रुभिर्नाभिभूयते** ॥१७९॥

(७) **मणिरामः ।** विचारे फलमाह **आयत्यामिति** ॥ १७९॥

(८) **गोविन्दराजः । आयत्यामिति ।** यः कार्याणामागामिकालदोषज्ञो गुणवत्कार्यमारभते, दोषवत्परिहरति यश्च वर्तमानकाले क्षिप्रमेवावधार्य कार्यं करोति, न दीर्घसूत्रो कार्ये यः कार्यशेषज्ञो भवति स तत्कार्यसमाप्तौ तत्फलं लभते । अत एवंविधकालत्रयसावधानत्वान्न कदाचित् शत्रुभिरभिभूयते ॥१७९॥

**यथैनं नाभिसंदध्युर्मित्रोदासीनशत्रवः ।**
**तथा सर्वं संविदध्यादेष सामासिको नयः ॥१८०॥**

(१) **मेधातिथिः ।** यथा न तैस्तैः प्रयोगैरभिसंदध्युस्तथा कुर्यादर्जितैरितरैरिवोपायैरित्येष साङ्क्षेपिको न्याय इत्युपसंहारः । षाड्गुण्यस्यातिसंधानविरोधश्चैवं न भवति ।

कृत्यानामुपजापरक्षणाद्व्यसनेषु प्रतिकारात्स्वमण्डलसंग्रहाद्गुणोपायानां सम्यक्प्रयोगात्कर्मस्व-भ्युत्थानमित्येवं द्रष्टव्यम् ॥१८०॥

(२) **सर्वज्ञनारायणः**। **अभिसंदध्युर्वञ्चयेयुः**। **सामासिकः** संक्षिप्तः ॥१८०॥

(३) **कुल्लूकः**। **यथैनं** राजानं मित्रादय उक्ता न बाधेरन् तथा सर्वसंविधानं कुर्यादित्येष सांक्षेपिको नयो नीतिः ॥१८०॥

(४) **राघवानन्दः**। राजा तु सर्वथाऽप्रमत्तः स्यादित्याह **यथेति**। **एनं** राजानं **नाभि-संदध्युः** नाभिभवेयुः। एष **सामासिकः** समासः संक्षेपस्तत्र भवः ॥१८०॥

(५) **नन्दनः**। अत्रायमनुष्ठेयार्थ इत्याह **यथैनमिति** ॥१८०॥

(६) **रामचन्द्रः**। **यथा एनं** शरणागतं **मित्रोदासीनशत्रवः नाभिसंदध्युः** न संधेयुः तथा **सर्वं संविदध्यात्** कुर्यात् **एषः सामासिकः** संक्षिप्तः **नयः** सामादिरूपाणां न्यायः ॥१८०॥

(७) **मणिरामः**। एनं राजानं। **नाभिसंदध्युः** न बाधेरन्। **संविदध्यात्** सन्निधानं कुर्यात्। **सामासिको नयः** सांक्षेपिको नयः नीतिः ॥१८०-१८१॥

(८) **गोविन्दराजः**। **यथेति**। **यथैनं** राजानं मित्रादय उक्ता न वञ्चयेयुः **तथा सर्वं** संविधानं कुर्यात्। इत्येवं सांक्षेपिको नयो नीतिः ॥१८०॥

**यदा तु यानमातिष्ठेदरिराष्ट्रं प्रति प्रभुः।**
**तदानेन विधानेन यायादरिपुरं शनैः ॥१८१॥**

(१) **मेधातिथिः**। इदानीमभियास्यतः कर्माह। यदोपचिकीर्षत्यरिराष्ट्रं प्रत्यभिमुखेन **तदानेन विधानेन** गच्छेदत्वरमाणः। वक्ष्यमाणोपन्यासः सुखावबोधनार्थः ॥१८१॥

(२) **सर्वज्ञनारायणः**। **यानमातिष्ठेत्** विग्रहार्थं यात्रामात्रार्थं वा ॥१८१॥

(३) **कुल्लूकः**। यदा पुनः शक्तः सन् शत्रुराष्ट्रं प्रति यात्रामारभेत्तदाऽनेन वक्ष्यमाण-प्रकारेण शत्रुदेशमत्वरमाणो गच्छेत् ॥१८१॥

(४) **राघवानन्दः**। कदाऽरिपुरं गन्तव्यं, कथं वा योद्धव्यं, कुत्र वा किं कर्तव्यमित्यपेक्षायां तत्रादौ **यानमनुवदन्नुचितकालमाह यदा त्विति** त्रिभिः। मात्सर्यक्रोधाज्ञानैर्न गन्तव्यमित्याह यदा त्विति। प्रभुः सकलशक्तिसंपन्नः **यानं यायादित्यत्र** प्रकृतिः प्रत्ययोच्चारणार्था तेन यात्रां कुर्यादित्यर्थः। केन? अनेन वक्ष्यमाणेन, शनैर्यायान्न तु हठात् ॥१८१॥

(५) **नन्दनः**। अथ यात्रां प्रस्तौति **यदेति**। **अनेन** वक्ष्यमाणेन ॥१८१॥

(६) **रामचन्द्रः**। **प्रभुः अरिराष्ट्रं प्रति** यदा यानं गमनं आतिष्ठेत् गच्छे**त्तदा अनेन** विधानेन वक्ष्यमाणलक्षणेन **अरिपुरं शनैः यायाद्** गच्छेदित्यर्थः ॥१८१॥

(८) **गोविन्दराजः**। **यदेति**। यदा त्वरिराष्ट्रं प्रति यात्रामारभेत शक्तः संस्तदाऽनेन वक्ष्यमाणेन प्रकारेण शत्रुदेशे त्वरमाणो गच्छेत् ॥१८१॥

**मार्गशीर्षे शुभे मासि यायाद्यात्रां महीपतिः।**
**फाल्गुनं वाथ चैत्रं वा मासौ प्रति यथाबलम् ॥१८२॥**

(१) **मेधातिथिः**। यातव्यापेक्षया बलापेक्षया दीर्घं योद्धुमिच्छन्बलप्रायः शारद-वासन्तिकसस्यप्रायं परराष्ट्रं **मार्गशीर्षे यायात्**। अत्र हि गच्छन् शारदं फलं गृहादिगतं सुखं

गृह्णाति, वासन्तं सस्यमुपहरति । कालश्च महान्दुर्गोपरोधादिकार्यक्षमो मार्गश्च प्रसिद्धवक्रपथोपभृतकाशोदकवीरुधो न भवन्ति, कालश्च नात्युष्णशीतः । उपचितमपि न सस्यं नानाप्रयुक्तं प्रियं सस्यत्रयोपघातकालविप्रकर्षापेक्षया च परं आश्रयं संधत्ते । उभयसस्योपघातावकर्षणं सम्यक्कृतं भवत्यात्मनश्च बलापचय इति । उपघातमात्रचिकीर्षया परदेशादेरल्पकालसाध्ये वा यातरि, बलप्रायः फाल्गुनचैत्रयोर्यायात् वासन्तिकसस्यप्रायदेशम् । तदाप्यात्मनो यवसादि भवति, परोपघातक्षेत्रगतसस्योपघातात् । **यथाबलमिति**। येन प्रकारेण बलानुरूपं यायादित्यर्थः ॥१८२॥

(२) **सर्वज्ञनारायणः**। **मार्गशीर्ष इति** मुख्यः पक्षः, तत्कालेऽन्नबाहुल्यात् शुभे ग्रहशुद्धयादियुक्ते । **फाल्गुनं चैत्रमिति** मध्यमः, तदापि यवान्नसंभवात् ॥१८२॥

(३) **कुल्लूकः**। यश्चतुरङ्गबलोपेतो राजा करिरथादिगमनविलम्बेन विलम्बितप्रयाणः तथा हैमन्तिकसस्यबहुलं च परराष्ट्रं जिगमिषुः समुपगमनाय शोभने **मार्गशीर्षे** मासि यात्रां कुर्यात् । यः पुनरश्वबलप्रायो नृपतिः शीघ्रगतिर्वा सर्वसस्यबहुलं परराष्ट्रं यियासुः स **फाल्गुने चैत्रे** वा मासे स्वबलयोग्यकालानतिक्रमेण **यायात्**, अत एव मन्वर्थव्यापारपरं संक्षेपेण याज्ञवल्क्यवचनम् (आचार. १३।३४८) 'यदा सस्यगुणोपेतं परराष्ट्रं तदा व्रजेत्' ॥१८२॥

(४) **राघवानन्दः**। अत्र **मार्गशीर्षा**दिर्व्यवस्थितविकल्पपरः । तत्र रथप्रधानः पार्थिवो मार्गशीर्षे गच्छेत् । चक्रवाताद्यभावे । अश्वप्रधानः **फाल्गुने** । पदातिप्रधानश्चैत्रे ॥१८२॥

(५) **नन्दनः**। **यायात्**कुर्यात् मासौ प्रतिमासयोरिति यावत् ॥१८२॥

(६) **रामचन्द्रः**। फाल्गुनं वा चैत्रं वा एतौ द्वौ मासौ यात्रां प्रति शुभौ । **यथाबलं** स्वबलानुसारं **यात्रां यायात्** ॥१८२॥

(७) **मणिरामः**। यानमासानाह **मार्गशीर्ष इति** ॥१८२॥

(८) **गोविन्दराजः**। **मार्गशीर्षे इति** । यश्चतुरङ्गबलप्रायो महीपतिः स मार्गशीर्षे मासि शुभे प्रचुरतरयवसं धान्यरथमार्गोपेते तच्छुभे दीर्घकालमप्रतो वाऽऽसन्नसस्यप्रत्यासन्ने यात्रां कुर्यात् । यः पुनरश्वबलप्रायो वासन्तसस्यप्रायं देशं याति, अदीर्घकाल एव यस्य यात्रा स **फाल्गुने चैत्रे** वा एवं स्वबलयोग्यकालाऽनतिक्रमेण **यायात्** ॥१८२॥

**अन्येष्वपि तु कालेषु यदा पश्येद्ध्रुवं जयम् ।**
**तदा यायाद्विगृह्यैव व्यसने चोत्थिते रिपोः ॥१८३॥**

(१) **मेधातिथिः** । एतद्व्यतिरेकेणा**न्येष्वपि** प्रावृडादि**काले**षु । **यदा** मन्येतात्मनोऽवश्यंभावि विजयं **तदा यायात्** । यदा हस्त्यश्वबलप्रायं वर्षास्वश्वबलं हस्तिबलं तदा हि स्वबलकालप्रभावादैकान्तिको जयः । व्यसनं परस्य स्वबलकोशादिगतम् । तस्मिन्नुत्पन्ने स्वबलकालनिरपेक्षो यायात् । व्यसनपीडितो हि शत्रुः साध्यो भवति । काष्ठमिव गुणोपयुक्तसन्नियोगमात्रादेव विनश्यति । विगृह्येति यातव्यमेवावष्टभ्याहूय यायात् । महानस्मिन्नेवावगम्यते ॥१८३॥

(२) **सर्वज्ञनारायणः**। **अन्येष्वपीति** । त्वधमः । कार्यविशेषोदयश्चात्र निमित्तं **विगृह्य** विग्रहं भाविनमुद्बुध्य कथंचिद्विग्रहज्ञानमात्रेण परस्य प्रणतिसंभवात् । रिपोर्व्यसने चोत्थिते न कालनियम इति **तदा** सर्व एव मुख्यः काल इत्यर्थः ॥१८३॥

(३) **कुल्लूकः**। उक्तकालव्यतिरिक्तेषु यदात्मनो निश्चितं **जयम**वगच्छेत्तदा स्वबल-योग्यकाले ग्रीष्मादावपि हस्त्यश्वादिबलप्रायो **विगृह्यैव** यात्रां कुर्यात्। शत्रोश्चामात्यादिप्रकृति-गोचरदण्डपारुष्यादिव्यसने जातेऽरिपक्षभूतायां तत्प्रकृतावप्युक्तकालादन्यत्रापि **यायात्**॥१८॥

(४) **राघवानन्दः**। नौगजप्रधानो वर्षास्वित्याह **अन्येष्वपीति**। कर्दमनदीप्लवनादेरन्यै-रसाध्यत्वात्। विगृह्य विग्रहं करिष्यामीति। उक्तव्यवस्थितिं निराह **व्यसने चोत्थित इति**। दैवात्सैन्यामात्यादीनां दण्डपारुष्यादिना कोपे सतीत्यर्थः॥१८३॥

(५) **नन्दनः**। **कालेषु** मासेष्वित्यर्थः। **व्यसने** मित्रबलादीनां व्यापत्तौ॥१८३॥

(६) **रामचन्द्रः**। **अन्येषु कालेषु** ध्रुवं जयं यदा पश्येत्तदा **विगृह्यैव** विग्रहं भाविनमुद्घुष्य कथंचिद्विग्रहज्ञानमात्रेण परस्य प्रणतिसंभवात् यात्रां यायात्। रिपोः स्वशत्रोर्व्यसने **उत्थिते** सति न संग्रामार्हकालनियमः॥१८३॥

(७) **मणिरामः**। **विगृह्यैव** हस्त्यश्वादिबलं गृहीत्वैव॥१८३॥

(८) **गोविन्दराजः**। **अन्येष्विति**। उक्तकालव्यतिरिक्तेष्वपि कालेषु यदात्मनो निश्चितं जयमाशङ्केत तदा हस्तिबलप्रायोऽश्वबलप्रायो, वर्षास्वश्वबलप्रायो हस्तिबलप्रायो ग्रीष्मे तदा विगृह्यैव यात्रां कुर्यात्। शत्रोश्च प्रकृतिकोपादौ **व्यसने** उपपन्ने उक्तकालव्यतिरिक्तेऽपि काले यायात्॥१८३॥

**कृत्वा विधानं मूले तु यात्रिकं च यथाविधि।**
**उपगृह्यास्पदं चैव चारान्सम्यग्विधाय च॥१८४॥**

(१) **मेधातिथिः**। 'मूले' स्वदुर्गराष्ट्रे कुर्यादथ पार्ष्णिग्राहश्च। तत्र 'विधानं' प्रतिविधानं कृत्वा दुर्गं तावत्प्रभूतधान्यादिकं सुसज्जयन्त्रप्राकारपरिखादि कार्यम्। राष्ट्रस्यापि––स्वबलं श्रेणीबलेभ्यो रक्षां विधाय कुर्याद्दानमानेभ्य उपसंयम्य प्रत्यन्तेषु प्रक्षेप्तव्यं पार्ष्णिग्राहं प्रति प्राह। तत्समर्थश्च बलैकदेशः स्वराष्ट्रे स्थापयितव्यः। यात्राप्रयोजनं **यात्रिकं** हस्त्यश्वादि-बलयोग्यं च प्रहरणधारणादिसज्जम्। **यथाविधि** परोपदेशं कृत्वा। **आस्पदं** प्रतिष्ठानम्। किं तर्ह्यतोऽपरकीयाः क्रुद्धादयो द्रष्टव्यास्ता**नुपगृह्य** स्वीकृत्याकारस्य परविषये निवृत्तेस्त-ज्ज्ञानाय **सम्यग्**यथावद्**विधाय** प्रयुज्य। किमयं दृष्टोपसंग्रहं कर्तुमारब्धमुत शत्रुपरिमण्डलं कोपयितुमथ मध्यममुदासीनं वा संश्रयितुम्, तथा मूलयात्रां वा हर्तुकामो विधिवच्छेदं वा कर्तुकाम, इत्यादि यथा चैतदेवं तथा॥१८४॥

(२) **सर्वज्ञनारायणः**। मूले स्थिरशिबिरे। **यात्रिकं** यात्रायोग्यं संनाहादि विधाय। **आस्पदं** शिबिरस्थानं गम्यदेशे परिगृह्य॥१८४॥

(३) **कुल्लूकः**। मूले स्वीयदुर्गराष्ट्ररूपे पार्ष्णिग्राहसंविधानं प्रधानपुरुषाधिष्ठितरक्षार्थं सैन्यैकदेशस्थापनरूपं प्रतिविधानं कृत्वा यात्रोपयोगि च वाहनायुधवर्म यात्राविधानं यथाशास्त्रं कृत्वा परमण्डलगतस्य च येनास्यावस्थानं भवति तदुपगृह्य तदीयान्भृत्यपक्षानात्मसात्कृत्वा चारांश्च कापटिकादीञ्छत्रुदेशवार्ताज्ञापनार्थं प्रस्थाप्य सम्यक्तया जाङ्गलानूपाटविकविषय-भेदेन त्रिविधं पन्थानं मार्गं शोधिततरुगुल्मादिच्छेदनिम्नोन्नतादिसमीकरणादिना संशोध्य तथा हस्त्यश्वरथपदातिसेनाकर्मकरात्मकं षड्विधं बलं यथोपयोगमाहारौषधसत्कारादिना संशोध्य सांपरायिकं संपरायः संग्रामः तदुपचितविधिना शत्रुदेशमत्वरया गच्छेत्॥१८४–१८५॥

(४) **राघवानन्दः।** कथं प्रवेष्टव्यमित्यस्योत्तरमाह **कृत्वेति** चतुर्भिः। **मूले** स्वराष्ट्रे प्रधानपुरुषाधिष्ठितं स्वराष्ट्ररक्षणक्षमं स्वसैन्यं स्थापयित्वा। **आस्पदं** येनास्पदेनावस्थानं भवति परकीयात्मसात्करणे तेषां परकीयभृत्यानां स्वकीयभृत्यवद्वस्त्रगृहान्नादि। चारान्प्रच्छन्न-दूतान्कार्पटिकादीन्पूर्वोक्तान् शत्रुदेशज्ञापनार्थं विधाय नियुज्य ॥१८४॥

(५) **नन्दनः।** **मूले** पुरराष्ट्रलक्षणे **विधानं** संविधानम् यात्रायोग्यं यात्रिकं तण्डुल-मुद्गादिकम् **आस्पदं** निर्मितगृहादिकम् यायादित्येव ॥१८४॥

(६) **रामचन्द्रः।** युग्मं। **मूले** स्थिरशिबिरे अग्रामे वसतिस्थाने **विधानं** रक्षां कृत्वा अरिपुरं शनैर्यायात्। किं कृत्वा? यात्रिकं संग्रामयोग्यं सन्नाहादिकं **यथाविधि उपगृह्य आस्पदं** शिबिरस्थानं **उपगृह्य** ॥१८४॥

(७) **मणिरामः।** **मूले** स्वीयदुर्गादौ **विधानं कृत्वा** रक्षार्थं प्रधानपुरुषाधिष्ठितसैन्यैकदेश-स्थापनरूपं। **यात्रिकं** वाहनयुद्धवर्मादिकं **उपगृह्य**। **आस्पदं** च उपगृह्य परम् इलगणस्य येनाव-स्थानं भवति तदुपगृह्य, तदीयभृत्यानात्मसात्कृत्येत्यर्थः। **चारान् विधाय** शत्रुदेश-वार्ताज्ञानार्थं प्रस्थाप्य ॥१८४॥

(८) **गोविन्दराजः।** **कृत्वेति।** **संशोध्येति।** पार्ष्णिग्राहसन्धानजनपददुर्गसंरक्षण-क्रुद्धादिवर्गोपदेशमनादिकं मूलमात्मदुर्गराष्ट्ररूपे संविधानं कृत्वा उपयोगिवाहनायुधचर्मम-न्त्रादिविधानं यथाशास्त्रं कृत्वा परमण्डलगतस्य येनास्पदमवस्थानं भवति तदुपगृह्य तदीयान् भृत्यपक्षानात्मसात्कृत्य परान् स्वकार्पटिकादीन् परमण्डलवार्ता च योधार्थं सम्यगवस्थाप्य, जाङ्गलानूपाटविकभेदेन त्रिविधं पन्थानं मार्गरोधकगुल्मादिच्छेदनिम्नोन्नतादिसमीक-रणोदपानखननादिना संशोध्य, तथा हस्त्यश्वरथपदातिसेनापतिकर्मकरात्मकं षड्विधं बलं स्वकं, यथायोगमाहारौषधसत्कारपूरणादिना संशोध्य साङ्ग्रामिकविधिना शत्रुदे-शमत्वरया व्रजेत् ॥१८४–१८५॥

**संशोध्य त्रिविधं मार्गं षड्विधं च बलं स्वकम्।**
**सांपरायिककल्पेन यायादरिपुरं शनैः ॥१८५॥**

(१) **मेधातिथिः।** **त्रिविधः** पन्था जाङ्गल आतप आटविक इति। केचिदाटविकस्थाने वनप्रक्षेपात् त्रिविध इति। अपर उन्नतो निम्नः सम इत्येवं त्रिविधम्। **संशोध्य** मार्गरोधिवृ-क्षगुल्मलताविच्छेदेन स्थलनिम्नयोः समीकरणं नदीगर्तयोस्तीर्थकरणं पथि रोधकव्यालसमुच्छेदः प्रवर्तकानामात्मीकरणं यवससेनादिमत्ता चेति। **षड्विधं बलमिति** केचित्। हस्त्यश्वरथ-पदातिसेनाकोशकर्मकरात्मकं षड्विधं बलमित्यन्ये। कोशस्थाने प्रक्षेपणमित्यपरे। मौलभृ-त्यश्रेणिमित्रामित्राटविकबलभेदात्। सांपरायिकविधानेन। 'सांपरायिक'युद्धे कृच्छ्रम्, तत्प्रयोजनं यस्य तत्सांपरायिकं दुर्गकल्पेन वा रिपुं प्रति **यायात्**। स च सैन्यनिवेशस्तेषु तेषु च स्थानेषु स्थावरजङ्गमदण्डो बहुमुखपरिघफलकशाखाभिः प्राकार इत्यादिस्तादृश-स्थापितः। विशेषतस्तु यात्रागतः ॥१८५॥

(२) **सर्वज्ञनारायणः।** **त्रिविधं मार्गं** जाङ्गलानूपाटविकमिति कश्चित्। ग्रामारण्यपर्वत-रूपमिति तु युक्तम्। **षड्विधं बलं** हस्त्यश्वरथपदातयश्चत्वारः हस्त्याद्यारोहकाः शस्त्रोपनायका-

श्रोत द्वाविति षड्विधम् । केचित्तु हस्त्यारोहकादय एकविधा वश्याः परेति षड्विधतामाहुः । **सांपरायिककल्पेन** संग्रामयोग्येन विधानेन । शनैर्यदि भध्ये परः सन्दध्यादित्याशया ॥१८५॥

(४) **राघवानन्दः** । **त्रिविधं** जाङ्गलाटविकानूपभेदेन तत्संशोध्य मार्गविरोधिततरुगुल्मनिम्नोन्नतादिच्छेदसमीकरणादिना तत्र जाङ्गलस्य लक्षणमुक्तम् । आटविकं अटवी वनं, तत्प्रायमाटविकं तस्य छेदेन । अनूपं जलप्रायं 'जलप्रायमनूपं स्या'दित्यभिधानात् । तस्य **पूरणेन षड्विधं** हस्त्यश्वरथपदातिसेनापतिकर्मकारात्मकं संशोध्य च बलस्य च संशोधनमारोग्यभावादिचिकित्सा । **सांपरायिककल्पेन** संपरायः संग्रामः, तदुचितविधिना पूर्वापरानुसन्धानं विना न गन्तव्यमित्याह **शनैरिति** ॥१८५॥

(५) **नन्दनः** । **त्रिविधं** जाङ्गलमनूपमाटविकञ्च बलस्य षड्विधत्वकामन्दकेनोक्तम् 'मौलं भृतं श्रेणिसुहृद्द्विषदाटविकं बलम् । षड्विधन्तु बलं व्यूह्य द्विषतोऽभिमुखं व्रजेदि'ति **सांपरायिककल्पेन** युद्धार्हसन्नाहेन आयुधौषधादिसंपादनेनेति यावत् ॥१८५॥

(६) **रामचन्द्रः** । **मार्गं त्रिविधं** जाङ्गलं आटविकं ग्रामारण्यपर्वतरूपम् । **षड्विधं** स्वकं बलं संगृह्य षड्विधं हस्त्यश्वरथपदातयः हस्त्यश्वाद्यारोहकाः शस्त्रोपनायकाश्चेति । **सांपरायिककल्पेन** संग्रामयोग्येन विधानेन ॥१८५॥

(७) **मणिरामः** । **त्रिविधो मार्गः** जांगलमनूपाऽऽटविकदेशभेदेन त्रिविधं पंथानं संशोध्य, तरुगुल्मादिछेदनिम्नोन्नतादिसमीकरणादिना । षड्विधं बलं. हस्त्यश्वरथपदातिसेनाकर्मकरात्मकं संशोध्य आहारौषधसंपादनादिना सांपरायिककल्पेन संपरायः संग्रामः तदुचितविधिना अरिपुरं शनैः अत्वरया यायात् ॥१८५॥

**शत्रुसेविनि मित्रे च गूढे युक्ततरो भवेत् ।**
**गतप्रत्यागते चैव स हि कष्टतरो रिपुः ॥१८६॥**

(१) **मेधातिथिः** । **शत्रुसेविनि** । **गूढे** प्रच्छन्ने **मित्रे गतप्रत्यागते च युक्ततरः** स्यात् । अभियुक्ततर आदृततरो भवेन्न विश्वसेदित्यर्थः । यस्मात्स **कष्टतरो रिपुर**न्येभ्यः क्रुद्धादिभ्यः । एवं च युक्ततरवचनात्कष्टतरवचनाच्च गतप्रत्यागतमग्राह्यमन्यस्येति गम्यते । स चतुर्विधः । कारणाद्गतस्ततो विपरीतकारणादागतो यथा दोषेण गतः पुनरागतो गुणमुभयोः परित्यज्य । कारणेनागत इति यः स त्याज्यो लघुबुद्धित्वाद्यत्किंचित्कारीति । पुनरस्य प्रत्ययस्तु न कार्यः । कारणाद्गतः कारणागतः, यथा स्वामिदोषेण गतः परस्मात्स्वदोषेण गत इति सत्कर्तव्यो यदि सङ्गितवादागतस्ततो ग्राह्यः । अथ परप्रयुक्तस्तेन वा दोषेणापकर्तुकाम इति ततो नेति परराष्ट्रं प्रत्य भिप्रस्थितः ॥१८६॥

(२) **सर्वज्ञनारायणः** । स्वस्य मित्रतामापन्ने विगूढे **शत्रुसेविनि** शङ्कितः स्यात् । तथा गतप्रत्यागते रिपुसमीपं गत्वा पुनरागत्य प्रविष्टेऽत्र ॥१८६॥

(३) **कुल्लूकः** । यन्मित्रं गूढं कृत्वा शत्रुं सेवते, यश्च भृत्यादिः पूर्वं विरागाद्गतः पश्चादागतः तयोः सावधानो भवेत् यस्मात्तावतिशयेन दुर्निग्रहो रिपुः ॥१८६॥

(४) **राघवानन्दः** । किंच **शद्विति** । **शत्रुसेविनि** शत्रोरेवानुकूले युक्ततरोऽतिशयप्रयत्नवान् । तत्र हेतुर्गते गमनोन्मुखे मित्रवदाचरति प्रकटितद्वारादिनानुकूलः प्रत्यागते प्रत्या**गम**नोद्यते तद्द्वारावरोधेन प्रतिकूल एव पुनरागमस्य तेनैवासंभवात् । **गूढे शत्रुसेविनि** मित्रे मित्रवदाचरत्यपि शत्रुपक्षपातिनि अतः **स हि रिपोरपि कष्टतरः** ॥१८६॥

(५) **नन्दनः।** **शत्रुसेविनीति।** द्वयं मित्रविशेषणं गतप्रत्यागते आत्मसकाशाच्छत्रुं गत्वा तत्सकाशात् प्रत्यागते सति इति द्वयोः प्रत्येकं परामर्शः ॥१८६॥

(६) **रामचन्द्रः।** **शत्रुसेविनि मित्रे** राजा **युक्ततरः** अतिशयेन युक्तो युक्ततरः, सावधानः भवेत्। च पुनः **गतप्रत्यागते** गमनागमने शत्रोः। **स रिपुः** **कष्टतरः** ॥१८६॥

(७) **मणिरामः।** **मित्रे गूढे शत्रुसेविनि** मित्रं गूढं कृत्वा शत्रुं सेवते तस्मिन्मित्रे गतप्रत्यागते च भृत्ये प्रथमतो गतः पश्चात्पुनरागतः तादृशे भृत्ये वा **युक्ततरः** सावधानो भवेत्। हि यस्मात् तावतिशयेन रिपू ॥१८६॥

(८) **गोविन्दराजः।** **शत्रुसेविनीति।** गतप्रत्यागते चैव तौ हि कष्टतरौ रिपू। यस्मिन्मित्रं गूढं कृत्वा शत्रुं सेवते, यश्च भृत्यादिः पूर्वं विरागाद्गतः पश्चादागतस्तयोः सावधानो भवेत् यस्मात्तावतिशयेन रिपू कष्टतरौ ॥१८६॥

**दण्डव्यूहेन तन्मार्गं यायात्तु शकटेन वा।**
**वराहमकराभ्यां वा सूच्या वा गरुडेन वा ॥१८७॥**

(३) **कुल्लूकः।** दण्डाकृतिव्यूहरचनादि **दण्डव्यूहः** एवं शकटादिव्यूहा अपि। तत्राग्रे बलाध्यक्षो, मध्ये राजा, पश्चात्सेनापतिः, पार्श्वयोर्हस्तिनस्तत्समीपे घोटकास्ततः पदातय इत्येवं कृतरचनो दीर्घः सर्वतः समविन्यासो दण्डव्यूहस्तेन तद्यातव्यं मार्गं सर्वतो भये सति **यायात्**। सूच्याकाराग्रः पश्चात्पृथुलः शकटव्यूहस्तेन पृष्ठतो भये सति गच्छेत्। सूक्ष्ममुखः पश्चाद्भागः पृथुमध्यो वराहव्यूहः, एष एव पृथुतरमध्यो गरुडव्यूहस्ताभ्यां पार्श्वयोर्भये सति व्रजेत्। **वराह**विपर्ययेण मकरव्यूहस्तेनाग्रे पश्चाच्चोभयत्र भये सति गच्छेत्। पिपीलिकापङ्क्तिरिवाग्रपश्चाद्भावेन संहतरूपतया यत्र यत्र सैनिकावस्थानं स शीघ्रप्रवीरपुरुषमुखः सूचीव्यूहस्तेनाग्रतो भये सति **यायात्** ॥१८७॥

(४) **राघवानन्दः।** व्यूहे दण्डादिपदप्रक्षेपस्तदाकृतिसूचनार्थः। व्यूहस्तु सेनायाः संस्थानं तेऽत्र सप्त तत्र। **दण्डव्यूहो** यस्याग्रे बलाध्यक्षो, मध्ये नृपतिः, पश्चात्सेनापतिः, पार्श्वे करिणस्तत्समीपेऽश्वादयः, ततः पदातय इत्येवं रचनाविशेषो दण्डाकार इति सर्वतो भये मार्गे तेन व्यूहेन रिपो राष्ट्रं **याया**दित्यन्वयः। पृष्ठतो भये च **शकटव्यूहः** स च सूच्यग्रः पश्चात्पृथुः। **वराहस्तु** सूक्ष्ममुखः पश्चादपि तथा पृथुमध्यः स एव **मकरो**ऽतीवदीर्घः, एतौ तु पार्श्वतो भयेऽपि। पिपीलिकापङ्क्तिरूपोऽग्रे दीर्घा वीरपुरुषप्रमुखाः पश्चाद्भागे संहता यत्र सैनिकाः। **सूचीव्यूहः** स एवाग्रतो भये। **गारुडस्त्व**ग्रे पश्चाच्च सूक्ष्मः प्रसारितपक्षवद्दीर्घः पृथूदर इति तत्र समायां भुवि दण्डगरुडसूचीभिर्यायाद्विषमायां संकटायां **शकटमकरवराहैरिति** ॥१८७॥

(५) **नन्दनः।** दण्डगरुडादयो व्यूहा नामसदृशाः कार्याः ॥१८७॥

(६) **रामचन्द्रः।** **दण्डव्यूहेन** दण्डशकटाद्याकृतिसाम्येन व्यूहभेदस्य गौणी संज्ञा। तेन मार्गे **यायात्** ॥१८७॥

(७) **मणिरामः।** व्यूहानाह **दंडेति।** दंडव्यूहः दंडाकारव्यूहः। **शकटेन** शकटाकारेण। एवमग्रेऽपि। तत्र अग्रे बलाध्यक्षः, मध्ये राजा, पश्चात्सेनापतिः, पार्श्वयोर्हस्तिनः, तत्समीपे अश्वाः, तदनंतरं पत्तयः, एवं दीर्घः सर्वतः समविन्यासो दंडव्यूहः, तेन व्यूहेन सर्वतो भये सति **यायात्**।

**सूच्या**काराग्रः पश्चात्पृथुलः शकटः तेन पृष्ठतो भये सति गच्छेत्। सूक्ष्ममुखपृष्ठः पृथुमध्यो **वराहः**। एष एव पृथुतरमध्यो गरुडः। ताभ्यां पार्श्वभये सति गच्छेत्। स्थूलमुखः पश्चाद्भागः सूक्ष्मव्योमकरः तेनाऽग्रे पृष्ठे च भये सति गच्छेत्। पिपीलिकापंक्तिरिव अग्रपश्चाद्भागेनासंहतरूपया यत्र सैनिकास्थानं स शीघ्रप्रवीरपुरुषमुखः **सूचीव्यूहः** तेनाऽग्रतो भये सति **यायात्**॥१८७॥

(८) **गोविन्दराजः**। **दण्डव्यूहेनेति**। दण्डाकृतिव्यूहरचना व्यूहः, एवं शकटादिव्यूहोऽपि। तत्राग्रे च बलाध्यक्षो, मध्ये राजा, पश्चात्सेनापतिः, पार्श्वयोर्हस्तिनः, तत्समीपे अश्वाः, ततः पदातयः, एवं कृतरचनो दीर्घः सर्वतः समविन्यासो दण्डव्यूहस्तेन तं यातव्यं मार्गं सर्वतो भये सति यायात्। सूच्याकाराग्रः पश्चात्पृथुः शकटव्यूहस्तेन पार्श्वतो भये सति व्रजेत्। वराहविपर्ययेण मकरव्यूहस्तेनाग्रे पश्चाद्भागे भये सति गच्छेत्। पिपीलिकापङ्क्तिवत् अग्रपश्चाद्भागेनासंहतरूपतया यत्र सैनिकाऽवस्थानं स दीर्घप्रचारः पुरुषमुखः सूचीव्यूहस्तेनाग्रतो भये सति **यायात्**॥१८७॥

**यतश्च भयमाशङ्केत्ततो विस्तारयेद्बलम्।**
**पद्मेन चैव व्यूहेन निविशेत सदा स्वयम्॥१८८॥**

(१) **मेधातिथिः**। तस्मिन्पथि यस्मात्प्रदेशात्परहितकारिभ्यो भयाशङ्का स्यात्तेन प्रदेशेन पूर्वगृहाद्**विस्तारयेद्बलम्**, गव्यूतिमात्रमधिकं वा। यवसंपन्नदृढप्रहारविस्तीर्णशत्रुपुष्टपरस्परमवरुद्धरथिकाश्वारोहकरिबलान्यवहितानि भवन्ति। समन्ताद्विभृतपरिमण्डलो मध्यनिविष्टविजिगीषुः **पद्मव्यूहः**। एवं नित्यं **निविशेत्**पुरान्निर्गच्छेद्ग्रामाद्वा॥१८८॥

(२) **सर्वज्ञनारायणः**। एषां च विकल्पेन करणे निमित्तमाह **यतश्चेति**। **निविशेत** शिबिरं कुर्यात्॥१८८॥

(३) **कुल्लूकः**। यस्या दिशः शत्रु**भयमाशङ्केत्** तस्यामेव **बलं विस्तारयेत्** समविस्तृतपरिमण्डलो मध्योपविष्टजिगीषुः पद्मव्यूहस्तेन पुरान्निर्गत्य सर्वदा कपटनिवेशनं कुर्यात्॥१८८॥

(४) **राघवानन्दः**। कथं स्थातव्यमित्यस्योत्तरमाह **यत इति**। **विस्तारयेत्** गव्यूतिमात्रमधिकं वा युद्धे संपन्नगूढप्रहारिभिरिति। **पद्मव्यूहस्तु** समंततो विस्तृतसेनो मध्यस्थितनृपतिः। अनेन रिपुपुरं प्रविश्य निवेशं कुर्यात्। **मेधातिथिस्तु** समन्ताद्विस्तृतपरिमण्डलो मध्यनिविष्टविजिगीषुः पद्मव्यूह इति। **आशंकेत भयं** यस्मादिति च पारं करोति॥१८८॥

(६) **रामचन्द्रः**। यतो दिग्भ्यः **भयमाशङ्केत् ततः बलं** सैन्यं **विस्तारयेत्**॥१८८॥

(७) **मणिरामः**। **यतः** यस्यां दिशि। समविस्तृतपरिमण्डलो रथोपविष्टो विजिगीषुः **पद्मव्यूहः** तेन पुरान्निर्गत्य **सदा** सर्वदा **स्वयं निविशेत्**. व्यूहनिवेशनं कुर्यात्॥१८८॥

**सेनापतिबलाध्यक्षौ सर्वदिक्षु निवेशयेत्।**
**यतश्च भयमाशङ्केत्प्राचीं तां कल्पयेद्दिशम्॥१८९॥**

(१)**मेधातिथिः**। **सेनापतिः**, समग्रस्य धनस्याधिपति**र्बलाध्यक्षः**, तयोर्बहुत्वाभावाद्द्विवचननिर्देशाच्च सर्वदिक्षु तदसंभव इति, तत्पुरुषास्तच्छब्देनोच्यन्ते। तदीयपुरुषसन्निवेशाच्च **सर्वदिक्षु** तावेव सन्निवेशितौ भवतः। तेन भिन्नैस्तुरगगजादिभिस्तत्प्रतिबद्धनिवेशानां संयोधनाय

समन्ततो निवेश्य, गिरिं वनं गर्तं वा पृष्ठतोऽध्यक्षं कृत्वा । यतो भयमाशङ्केत् यया सा प्राची दिग्भवति । एवं निवेशं कुर्यादभिमुखनिर्गमार्थमिव विद्वद्भिः ॥१८९॥

(२) **सर्वज्ञनारायणः** । **सेनापतिः**, सैन्ये प्रधानभूतः स्वयं योद्धा **बलाध्यक्षो** बलावेक्षकः । **प्राचीं तामिति** । तत्संमुखो निविशेतेत्यर्थः ॥१८९॥

(३) **कुल्लूकः** । हस्त्यश्वरथपदात्यात्मकस्याङ्गदशकस्यैकः पतिः कार्यः, सच पत्तिक उच्यते । पत्तिकदशकस्यैकः पतिः **सेनापतिरुच्यते** । तद्दशकस्यैकः सेनानायकः । स एव च बलाध्यक्षः **सेनापतिबलाध्यक्षौ** समस्तासु दिक्षु संघर्षयुद्धार्थं नियोजयेत् । यस्याश्च दिशो यदा भयमाशङ्कत तदा तामग्रे दिशं कुर्यात् ॥१८९॥

(४) **राघवानन्दः** । अत्र कृत्यविशेषमाह **सेनापतीति** । अत्र च एकेभैकरथात्र्यश्वापत्तिः पञ्चपदातिकेति (?) । हस्त्यश्वरथपदात्यात्मकस्याङ्गदशकस्यैकः पत्तिः स पत्तिः पत्तिदशाध्यक्षः सेनापतिस्तद्दशाध्यक्षो **बलाध्यक्ष इति** तौ चतुर्दिक्षु **निवेशयेत्** । **प्राचीं तां** शङ्कास्पदां दिशं अग्रे कृत्वा तिष्ठेदिति भावः ॥१८९॥

(५) **नन्दनः** । **बलाध्यक्षो** बलानुसन्धायकः । **तां दिशं प्राचीं कल्पयेत्** । तां दिशमभिमुखो निविशेत् इत्यर्थः ॥१८९॥

(६) **रामचन्द्रः** । राजा **सेनापतिबलाध्यक्षौ** सर्वदिक्षु **निवेशयेत्** । **यस्यां भयमाशङ्केतां** दिशं **प्राचीं** कल्पयेत् । **प्राचीमिति** । तत्संमुखो भूत्वा निवेशयेदित्यर्थः ॥१८९॥

(७) **मणिरामः** । सेनापतिदशकस्य नायकः **बलाध्यक्षः** । तां भययुक्तां दिशम् । **प्राचीं** अग्रे कुर्यात्, प्रथमतस्तस्यां दिशि युद्धं कुर्यादित्यर्थः ॥१८९॥

(८) **गोविन्दराजः** । **सेनापतिबलाध्यक्षाविति** । हस्त्यश्वरथपदात्यात्मकस्याङ्गदशकस्यैकः पतिः कार्यः, स पत्तिक उच्यते । पत्तिकदशकस्यैकः पतिः स **सेनापतिः** । तद्दशकस्यैकः स नायकः । स एव च **बलाध्यक्षः**, तौ सर्वासु दिक्ष्वनेकप्रधानत्वे सति संघर्षयुद्धार्थं नियोजयेत् । यस्याश्च दिशो भयमाशङ्केत् तामग्रे दिशं कुर्यात् ॥१८९॥

**गुल्मांश्च स्थापयेदाप्तान्कृतसंज्ञान्समन्ततः ।**
**स्थाने युद्धे च कुशलानभीरूनविकारिणः ॥१९०॥**

(१) **मेधातिथिः** । **गुल्मान्मनुष्यसमवायान्** । केचित्साक्षात्समन्ततः सशङ्खपटहा, अन्ये विपरीतास्तत्र चोत्पन्नं दुश्चिकित्स्यं महते चानर्थाय । गुणैर्विशेषयति **आप्तानाप्तसदृशानित्यभेदार्थम्** । **कृतसंज्ञान्** । कृता संज्ञा सम्बोधनाय यैस्ते कृतसंज्ञास्तानवसरे युद्धेषु शङ्खभेरीनादध्वजादिभिर्वाद्यैस्तूर्यमेवाहरिष्यामस्तदपगमाशङ्कायां चैवमेव कुर्यात् । शङ्खे आहते ध्वजे वोच्छ्रिते पृथक्पृथगवस्थातव्यम्, एवं संहतैरेवं प्रहर्तव्यं, एवं व्यावर्तितव्यमित्यादि स्थितम् । **स्थाने कुशलाः** अन्यैः शूरैः शक्यमागन्तुं समेतेन शक्यमस्मिन् वयमपृथक् परे पृथगित्यादि । **युद्धे** अनुसरणादौ **कुशला** भवन्तः संहतकैर्योधनीयाप्रसारं कृत्वा प्रविष्टाः पृष्ठदेशात् प्रहारिणः चित्रं योजयितव्याः, भग्नानामनेकायनशतानां पृष्ठं ग्राह्यमित्यादि । **अभीरवः** अनेन विस्तीर्णसमेताः । **अविकारिणोऽभेदात्मकैर्युक्तमपरस्य** । एवमेतान्गुल्मान्समन्ततस्तिसृषु दिक्षु गव्यूतिमात्रव्यापी प्रत्यहमनियतदेशान् बहून् स्थपतेर्भयप्रतिबोधनार्थमवहिते भेदादरिजनो

विश्वस्तो भवति, दानमानकार्यदर्शनादिभिरपवृत्ते युद्धेऽमात्यादिभिः सह सर्वेषां स्वार्थः संग्रामो मम नाममात्रं राजेति सर्वे वयं समानविभवोपभोगाय जये राज्यं पराजये स्वर्ग इति हेतुनाऽऽगताः ॥१९०॥

(२) **सर्वज्ञनारायणः**। गुल्मान् गुल्मदेशस्थान्। **कृतसंज्ञान्**तत्संकेतज्ञस्यैव प्रवेशादय इति संकेतं कृत्वा। **स्थाने** गुल्मस्थानावस्थाने । **युद्धे** युद्धादिभूमिस्थाने । **कुशलान्** कृतानुभवान् । अभीरून् संग्राममरणादभीतान् । **अविकारिणः** आप्तत्वे सत्यपि कदाचिदागन्तुकविचार-रहितान् ॥१९०॥

(३) **कुल्लूकः**। **गुल्मान्**सैन्यैकदेशा**नाप्त**पुरुषाधिष्ठितान् स्थानापसरणयुद्धार्थं कृतभेरी-पटहशङ्खादिसंकेतानवस्थानयुद्धयोः प्रवीणान्निर्भयानव्यभिचारिणः सेनापतिबलाध्यक्षान्दूरतः सर्वदिक्षु पारक्यप्रवेशवारणाय शत्रुचेष्टापरिज्ञानाय च नियोजयेत् ॥१९०॥

(४) **राघवानन्दः**। किंच **गुल्मानाप्त**पुरुषाधिष्ठितसैन्यैकदेशान् **कृतसंज्ञान्** युद्धोद्यम-सूचकभेरीपटहशङ्खादिसङ्केतान् सेनापतिबलाध्यक्षयोर्दूरतः स्थापयेदित्यन्वयः । **कुशलान्** अव-स्थानयुद्धयोः। **अविकारिणो** धनलोभादिना विकर्तुमशीलान् ॥१९०॥

(५) **नन्दनः**। सेनानिवेशविशेषो **गुल्मः स्थाने**ऽपलायने। **अविकारिणः** अकृतापराधान् ॥१९०॥

(६) **रामचन्द्रः**। सेनायाः समन्ततः **कृतसंज्ञान्** शिरस्युपरि। पत्रं पुष्पं धारयेदित्यर्थः। एतादृशान् **गुल्मान्** रक्षकान् **आप्तान्** स्थापयेत् **स्थाने** युद्धस्थाने **युद्धे च कुशलान्** ॥१९०॥

(७) **मणिरामः**। गुल्मान् सैन्यैकदेशान्। **कृतसंज्ञान्** स्थानापसरणवधज्ञानार्थंकृत-भेर्यादिशब्दसंकेतान्। **स्थाने युद्धे च** युद्धावस्थानयुद्धयोः **कुशलान्**। **अविकारिणः** अव्यभिचारिणः एतादृशान् सेनापतिबलाध्यक्षान् दूरतः सर्वदिक्षु शत्रुप्रवेशवारणाय शत्रुचेष्टाज्ञानाय च नियोजयेत् ॥१९०॥

(८) **गोविन्दराजः**। **गुल्मानिति**। गुल्मान् स्थानकव्याप्तपुरुषाऽधिष्ठितान् स्थाना-पसरणयुद्धाद्यर्थकृतशङ्खभेरीपटहदिसङ्केतान् वनावस्थानप्रणीतान्निर्भयान् अव्यभिचारान समन्तात्स्थापयेत् ॥१९०॥

**संहतान्योधयेदल्पान्कामं विस्तारयेद्बहून् ।**
**सूच्या वज्रेण चैवैतान्व्यूहेन व्यूह्य योधयेत् ॥१९१॥**

(१) **मेधातिथिः**। **असंहता** हि बलवद्विस्तीर्णं बलमासाद्यावयवशो विध्वंसनाय वाहनाघातः क्षयं यान्ति तद्विनाशे चोत्पन्ना इमेऽतोऽल्पानात्मीयान्**संहतान्यो**धयेदन्योन्यापेक्षया युध्यमानान-भिघ्नत। इतरेतरानुग्रहात्परस्परानुरागात्स्पर्धायां च परान्संहतान्सोढुं समर्था भवन्ति। **कामं** यथेष्टं कार्यार्थं **बहून्विस्तारयेद्**विप्रकीर्णान्योधयेदित्यादि मन्येत। भिन्नांस्तांश्चैतान्भयमेष्यति, परान्स्वान्वा बहून्दृष्ट्वा त्रासः स्यादिति। सूची पूर्वोक्तोऽक्षव्यूहभेदोऽग्रतः पृष्ठतश्च त्रिधा व्यवस्थितः पार्श्वयोर्भेदनम्। तेन चात्मानं सूचिव्यूहं विभज्य योधयेत्। सतां च सर्वव्यूहानां प्रतिष्ठाव्यूहनसमर्थाविति प्रतिगृहीतावेवं कारणात्। यदा तु परबले ह्येतावेव भवतस्तदा स्वे बले विपर्ययः कार्यः। तुल्यत्वे तु पुष्टिमत्त्वानुरक्तकुशलमाननप्रभूतैकार्थकारित्वादित्यतो विशेषे

यथासंभववाक्यैः। योधयेदिति वचनाद्राजा स्वयं तत्प्रतिसंधानार्थं व्यूहदुर्गाद्यमश्वे प्रतिग्रहभूतस्तिष्ठेत्। **समानतन्त्रेणोक्तम्** "द्वे शते धनुषां गत्वा राजा तिष्ठेत्प्रतिग्रहः। भिन्नसंघातनार्थं तु न युध्येताप्रतिग्रहः" ॥१९१॥

(२) **सर्वज्ञनारायणः। सूच्याल्पान्। वज्रेण व्यूहेन** ॥१९१॥

(३) **कुल्लूकः। अल्पान्योधान्संहतान्**कृत्वा बहून्पुनर्यथेष्टं **विस्तारयेत्। सूच्या** पूर्वोक्तया वज्राख्येन व्यूहेन त्रिधा व्यवस्थितबलेन रचयित्वा योधान् **योधयेत्** ॥१९१॥

(४) **राघवानन्दः**। कथं योद्धव्यमित्यस्योत्तरमाह **संहतानिति**। संहतान्परकीयान्प्रति **अल्पान्योधान्योधयेत्** युद्धाय नियोजयेत्। अल्पान्प्रति वा **बहूंश्चेद्विस्तारयेत्** प्रदर्शयेत्। **वज्रेणेति** त्रिधा व्यवस्थितबलो वज्र इत्यभिधीयते ॥१९१॥

(५) **नन्दनः**। अल्पबलश्चेदल्पान्स्वकीयान्योधान् **संहतान्कृत्वा योधयेत्**। सूच्या व्यूहेनाल्पबलः वज्रव्यूहेन बहुबल इति विवेकः ॥१९१॥

(६) **रामचन्द्रः। संहतान्** एकत्रस्थान् **अल्पान् बहून्वा** स्थापयेत् **विस्तारयेत्** योजयेत् ॥१९१॥

(७) **मणिरामः। अल्पान्** संहतान् एकीभूतान्**योधयेत्** बहून् यथेच्छं विस्तारयेत् **सूच्या** पूर्वोक्तया **वज्रेण** वज्राख्येन **व्यूहेन** त्रिधा व्यवस्थितबलेन, **व्यूह्य** व्यूहं रचयित्वा एतान् योधान् **योधयेत्** ॥१९१॥

(८) **गोविन्दराजः। संहतानिति**। अल्पान् योधान् संहतान् कृत्वा योधयेद्बहून् पुनर्यथेच्छं **विस्तारयेत्। सूच्या** पूर्वोक्तया वज्राख्येन वा व्यूहेन त्रिधाऽवस्थितबलेन रचयित्वा योधनं योधयेत् ॥१९१॥

**स्यन्दनाश्वैः समे युध्येदनूपे नौद्विपैस्तथा।**
**वृक्षगुल्मावृते चापैरसिचर्मायुधैः स्थले ॥१९२॥**

(१) **मेधातिथिः**। सेनानां देशस्य प्रक्लृप्त्यर्थमाह—समप्रदेशे रथै रश्वैश्च युध्येत। तत्र हि तेषामप्रतिघातः। **अनूपः** पानीयप्रायः। तत्राप्यल्पोदके हस्तिभिरगाधोदके तु नौभिः। तेषां हि तत्र सुखप्रचारता। वृक्षैर्गुल्मैश्च संछन्ने धनुर्भिः, तद्ग्रहणाच्च बलीवर्दगर्ताद्याकुलो गृह्यते, समानकार्यत्वात्। स्थलमिति पाषाणवृक्षलतागर्तादिरहितो देशस्तस्मिन्सिद्धिः। धार्यैः शरादिभिरायुधैश्च शक्त्यादिभिर्युध्येत आसन्नयुद्धत्वादेवं सामर्थ्यप्रदर्शनार्थत्वादस्य ॥१९२॥

(२) **सर्वज्ञनारायणः**। स्यन्दनाश्वैः स्यन्दनैरश्वैश्च। चापैरसिचर्मायुधैरिति पदातीनामायुधकथनम्। अश्वादयो देशविशेषे, पदातयस्तु सर्वत्रेत्याशयः ॥१९२॥

(३) **कुल्लूकः**। समभूभागे रथाश्वेन युध्येत, तत्र तेन युद्धसामर्थ्यात्तदानुगतोदके नौकाहस्तिभिः तरुगुल्मावृते धन्विभिर्गर्तकण्टकपाषाणादिरहितस्थले खड्गफलककुन्ताद्यैरायुधैर्युद्धयेत ॥१९२॥

(४) **राघवानन्दः**। यथाक्रमं युद्धोचितं देशमाह **स्यन्दनेति**। समे समस्थले, शुष्क इति यावत्। अनूपे अल्पोदकस्थले नावश्च द्विपाः करिणस्तैः। वृक्षाश्च गुल्मा वंशादयस्तैरावृते स्थले निम्नोन्नते ॥१९२॥

(५) **नन्दनः**। अनूपः प्रभूतजलो देशः ।।१९२।।

(६) **रामचन्द्रः**। समे देशे स्यन्दनाश्वैर्युध्येत । अनूपे सजले देशे नौकाभिः युध्येत । तथा वृक्षगुल्मावृते देशे चापैर्धनुर्भिः तथा असिचर्मायुधैः युध्येत ।।१९२।।

(७) **मणिरामः**। समे समभूमौ। अनूपे अनुगतोदके । स्थले गर्तकंटकपाषाणादि-रहिते । आयुधैः कुंताद्यैः ।।१९२।।

(८) **गोविन्दराजः** । **स्यन्दनाश्वैरिति** । समभूभागे रथाश्वैर्योद्धव्यम् । तत्र रथसामर्थ्यात्, तथानुगतोदके नौहस्तिभिर्वृक्षगुल्मव्याप्ते धनुर्भिः पाषाणकंटकगर्तादिरहिते खड्गफलकाख्यैरायुधैः ।।१९२।।

**कुरुक्षेत्रांश्च मत्स्यांश्च पञ्चालान् शूरसेनजान् ।**
**दीर्घाँल्लघूंश्चैव नरानग्रानीकेषु योजयेत् ।।१९३।।**

(१) **मेधातिथिः**। किंच, **कुरुक्षेत्रं** प्रसिद्धम्। **मत्स्यसंज्ञो** विराटदेशो नागपुरे **पञ्चालाः**। उभये कान्यकुब्जा आहिच्छत्राश्च। **शूरसेनजा** माथुराः। क्वचिच्चात्र भावार्थे प्रत्ययो लुप्तनिर्दिष्टः; एतद्देशजा हि प्रायेण महावर्ष्माणो बलवन्तः **पृथुवक्षसः** शूरा अभिमानिनो दुर्विषहा इत्यत्र येऽनीकस्थिताः परेषां भयहेतवो भवन्ति । दीर्घकायाध्यस्तानल्पदेशा अपि दीर्घश्वासकरा महाकायत्वात् लघवस्तु मरणासमर्था निर्भयेन जनेन प्रच्छन्ना विद्धाः प्रहरन्तोऽपकारासमर्था आदर्शभूताश्चैत इतरेषां भवन्ति ।।१९३।।

(२) **सर्वज्ञनारायणः**। लघून् शीघ्रम् । अग्रानीकेषु तेषामापततामधृष्यत्वात् ।।१९३।।

(३) **कुल्लूकः**। कुरुक्षेत्रभवान्मत्स्यान्विराटदेशनिवासिनः पञ्चालान्कान्यकुब्जाहिच्छ-त्रोद्भवान् शूरसेनजान् माथुरान्प्रायेण पृथुशरीरशौर्याहङ्कारयोगात्सेनाग्रे योजयेत्। तथान्यदेशोद्भवानपि दीर्घलघुदेहान्मनुष्यान्युद्धाभिमानिनः सेनाग्र एव योजयेत् ।।१९३।।

(४) **राघवानन्दः** । मनुष्यसंनिवेशप्रकारमाह **कौरुक्षेत्रांश्चेति** । कुरुक्षेत्रादयो देशविशेषास्तदुद्भवान् । लघून् शरीरतो विक्रमतश्च । अग्रानीकेषु अनीकान्। सेनानामग्रेषु ।।१९३।।

(५) **नन्दनः**। कुरुक्षेत्रादिदेशजाः कृतज्ञाः शूरजाश्च तेष्वपि दीर्घाः प्रतिपक्षभीषणाश्च तेष्वपि लघवः प्रवृत्तिक्षमाश्च अतस्तानग्रानीकेषु योजयेदित्यभिप्रायः ।।९९३।।

(६) **रामचन्द्रः**। दीर्घान् नालसंघान् पश्चिमदेशनिवासिनः । लघून् पर्वत-वासिनः ।।१९३।

(७) **मणिरामः**। मत्स्यान् विराटदेशनिवासिनः । पांचालान् कान्यकुब्जदेशोद्भवान्। शूरसेनजान् माथुरान्। इतरान् अन्यदेशोद्भवानपि दीर्घान् लघून् दीर्घलघुदेहान् ।।१९३।।

(८) **गोविन्दराजः**। **कौरुक्षेत्रानिति**। कुरुक्षेत्रभवान् मत्स्यान् विराटदेशवासिनः पाञ्चालान् कान्यकुब्जान् भृत्यान् शूरसेनजान् पृथुशरीरान्प्रायेण पृथुशरीरबलशौर्याऽभिमान-योगात् सेनाग्रेषु योजयेत्, तथाऽन्यानपि दीर्घान् लघुमनुष्यांश्च ।।१९३।।

**प्रहर्षयेद्बलं व्यूह्य तांश्च सम्यक् परीक्षयेत् ।**
**चेष्टाश्चैव विजानीयादरीन्योधयतामपि ।। १९४ ।।**

(१) **मेधातिथिः**। व्यूहं रचयित्वाऽस्त्रबले भृशं दर्शयन्किमेषां जीयते, जिता एवामी युष्मत्प्रतापेनेत्येवं प्रहर्षयेत् । 'जये महानर्थलाभः, आश्रितोपाश्रितसुखम्, वधे वाऽपि स्वर्गो भर्तृपिण्डनिर्यातनं च, पराजये त्रितयाभाव' इत्यादिनैमित्तिकोऽपि तदुपदेशः । तादृशनिमित्त-नियमान्मानय सहस्वोर्व्यावश्यंभावो यदि प्रधानपुरुषः स्वजनवधो राजा तदप्रतिग्रहव्याजेन स्थितो भीरुत्वात् स्वयं युद्धं न कामयत इत्यादि । यत्र ये ब्रूयुर्नैतदेव स्वार्थ एवायमस्माकमत्र वधः शस्त्रोपजीविभूतानां संग्रामविशेषधर्मोऽव्ययीभावः स्वधर्मायासोऽनर्थहेतुः, राजा सर्वप्रकारै रक्षणीयः। परिश्रान्तानां चास्माकमपरिश्रान्तसुखमनुग्रहं करिष्यतीत्येवमर्थं स्थित' इति तान्विशेषतो गृह्णीयात् । जेतुः प्रशंसितुः परसंव्ययं वा कारयेयुस्तानुपग्रहैः परिष्वङ्गालङ्कार-दानादिना च वशीकुर्यात् । चेष्टां चैवारीणां योधयतां विजानीयात् । कथं युद्धे चेष्टन्ते कोशा बलं वा । केचिद् द्विधाहृदयाः केचित्तु पक्षान्त इत्यादिचिन्तानित्यत्वान्मनुष्याणामुपकुर्वतोऽपि स्वार्थवशादुपकुर्वतीत्यत्र दुष्टानाप्तबलमध्ये विन्यसेद्यथाऽरिर्दुर्गाश्रितो भवति ॥१९४॥

(२) **सर्वज्ञनारायणः**। परीक्षयेत् स्वयमनुसंदध्यात् ॥१९४॥

(३) **कुल्लूकः**। बलं रचयित्वा जये धर्मलाभः अभिमुखहतस्य स्वर्गप्राप्तिः, पलायने तु प्रभुदुरितग्रहणं नरकगमनं च इत्याद्यर्थवादैर्युद्धार्थं प्रोत्सायेत् । तांश्च योधान्केनाभिप्रायेण हृष्यन्ति कुप्यन्ति वेति परीक्षयेत् । तथा योधानामरिभिः सह युद्धयमानानामपि सोपध्यनुपधि-चेष्टा बुध्येत ॥१९४॥

(४) **राघवानन्दः**। किंचान्यत् प्रहर्षयेदिति । 'स्वर्गद्वारमपावृतम् । सुखिनः क्षत्रियाः पार्थ लभन्ते युद्धमीदृशम् ॥ हतो वा प्राप्स्यसि स्वर्गं जित्वा वा भोक्ष्यसे महीं'मिति (भ. गी. २।३२) । तथा 'ग्रामं दास्यामि धनं दास्यामी'त्यादिना प्रहर्षयेत् योधानां हर्षमुत्पादयेत् । योधयतां चेष्टाः स्वपरपक्षपातिकर्माणि विजानीयात्, दूतेनेति शेषः ॥१९४॥

(५) **नन्दनः**। तानग्रानीकेषु योजितान् योधयतां बलाध्यक्षाणाम् ॥१९४॥

(६) **रामचन्द्रः**। अरीन्योधयतां पुंसां चेष्टां विजानीयात् ॥१९४॥

(७) **मणिरामः**। जये धर्मलाभः स्वर्गप्राप्तिरित्यादिवाक्यैः प्रहर्षयेत् ॥१९४॥

अरिं दुर्गाश्रितमयुध्यमानं । यवसं घासः ॥१९४-१९५॥

(८) **गोविन्दराजः**। प्रहर्षयेदिति । 'चेष्टां चैव विजानीयादरीणां युध्यता'मिति । बलं रचयित्वा जये धर्मार्थौ पराजये स्वर्गानृण्ये इत्येवमादिना युद्धार्थं प्रोत्साहयेत् । तांश्च योधान् समीक्ष्य परीक्षयेत् । क एवमुक्त्वा हृष्यन्ति कुप्यन्ति चेति तथा योधानामरिष्वयुध्यमानानामपि सोपधानयुद्धादिचेष्टाः विजानीयात् ॥१९४॥

**उपरुध्यारिमासीत राष्ट्रं चास्योपपीडयेत् ।**
**दूषयेच्चास्य सततं यवसान्नोदकेन्धनम् ॥ १९५ ॥**

(१) **मेधातिथिः**। तद्दुर्गलंभोपायमाह—उपरोधस्तथा कर्तव्यो यथा न कश्चिन्निष्क्रामति न किंचित्प्रविशति । राष्ट्रं दुर्गाद्बहिर्देशस्तस्योपपीडनं स्वदेशापवाहोपमर्दनादिभिः । यवसादीनां 'दूषणं' विनाशनम्, असद्द्रव्यमिश्रणादिभिः ॥१९५॥

(२) **सर्वज्ञनारायणः**। इन्धनदूषणं जलेनार्द्रीकरणादि ॥१९५॥

(३) **कुल्लूकः**। दुर्गाश्रयमदुर्गाश्रयं वा रिपुमयुध्यमानमप्यावेष्टयासीत। अस्य च देश-मुत्सादयेत्। तथा घासान्नोदकेन्धनानि सर्वदाऽस्यापद्रव्यसंमिश्रणादिना दूषयेत् ॥१९५॥

(४) **राघवानन्दः**। अरिषु कृत्यान्तरमाह **उपेति** त्रिभिः। उपरुध्यावपीडयेल्लुण्ठ-नाग्न्यादिदानेन। दूषयेत् भेदयेत् विषादिना वा ॥१९५॥

(६) **रामचन्द्रः**। नगरवेष्टनमाह **उपरुध्येति** त्रिभिः। अरिं शत्रुं उपरुध्य वेष्टयित्वा आसीत स्थितो भवेत्। अस्य राज्ञः राष्ट्रं देशं उपपीडयेत्। च पुनः यवसान्नोदकेन्धनानि दूषयेत्। यवसेन्धनमग्निना दाहयेत्। एतानि अन्नं क्षेत्रस्थं लुम्पेत् मार्गावरोधेन महार्घं कुर्यात् ॥१९५॥

(८) **गोविन्दराजः**। **उपरुध्येति**। दुर्गापाश्रितमपि युध्यमानमरिं दुर्गवेष्टनद्वारेणा-वेष्टयासीत। अस्य च रात्रौ दुर्गाद्बहिर्देशं लुण्ठनादिनोपपीडयेत्। घासान्नोदकेन्धनानि वास्य सर्वदापद्द्रव्यसंमिश्रणादिना दूषयेत् ॥१९५॥

**भिन्द्याच्चैव तडागानि प्राकारपरिखास्तथा।**
**समवस्कंदयेच्चैनं रात्रौ वित्रासयेत्तथा ॥१९६॥**

(१) **मेधातिथिः**। तडागग्रहणं सर्वजलाशयदर्शनार्थम्। तत्र तडागस्य सेतुबन्धेन प्रयोजनभेदनम्। प्राकारस्य यंत्रैर्विदारणं सुरङ्गया वा भङ्गः। परिखायाः पूरणेन पार्श्वभङ्गेन वा। छिद्रेषु प्रवीरपुरुषैरवस्कंदयेत्। दुर्गे रात्रौ च वित्रासयेत्। अग्निकुंभशिरस्कैः शिवावद्रुतानि कुर्वद्भिर्मनुष्यैः। ये नराः स्वयमुत्पतदर्जनाद्रात्रौ जाग्रति, जागरणावजीर्णो लोकः सुसाध्यो भवति ॥१९६॥

(२) **सर्वज्ञनारायणः**। तस्मिंश्च काले भूयो भूयः समवस्कन्दयेत् सौप्तिकेन हन्यात् ॥१९६॥

(३) **कुल्लूकः**। शत्रोरुपजीव्यानि तडागादीनि नाशयेत्, तथा दुर्गप्राकारादी-न्भिन्द्यात्तत्परिखाश्च भेदेन पूरणादिना निरुदकाः कुर्यात्। एवं च शत्रूनशङ्कितमेव सम्यगव-स्कन्दयेत्तथा शक्ति गृण्हीयात्। रात्रौ च ढक्काकाहलिकादिशब्देन वित्रासयेत् ॥१९६॥

(४) **राघवानन्दः**। तडागानि जलाशयान् तथा परिखाः समन्ततो व्यापका अगाधा जलशालिनीः खातस्वरूपाः भिन्द्यात्। समवस्कन्दयेत् शक्तितो गृण्हीयात् अग्निप्रक्षेपादिना चैन-मरिं शोषयित्वा त्रासयेत् रात्रौ च ढक्कादिशब्देन ॥१९६॥

(५) **नन्दनः**। समवस्कन्दयेत् सौप्तिकं कारयेत्। 'अवस्कन्दस्तु सौप्तिक'मिति नैखण्डवाः। एनं शत्रुम्। रात्रौ वित्रासयेच्च ॥१९६॥

(६) **रामचन्द्रः**। च पुनः एनं राजानं ग्रामवासं अवस्कन्दयेत् सौप्तिकं हन्यात् ॥१९६॥

(८) **गोविन्दराजः**। **भिन्द्यादिति**। दुर्गोपस्थजीव्यानि तडागादीनि प्रभेदेन नाशयेत्। तथा दुर्गप्राकारान् भिन्द्यात् तत्परिखाश्च पूरयेत्। छिद्रकरणेन वा निरुदकाः कुर्यात्। एवञ्च शत्रुमशङ्कितमेव सम्यगवस्कन्दयेत्, तस्योपरि निपतेद्रात्रौ वा दिवा वा शिवासितादिभिः त्रासयेत्। इदानीं च मुहुर्मुहुः ॥१९६॥

**उपजप्यानुपजपेद्बुद्ध्येतैव च तत्कृतम्।**
**युक्ते च दैवे युध्येत जयप्रेप्सुरपेतभीः ॥१९७॥**

(१) **मेधातिथिः**। तस्मिंश्च काले भूयोभूयः उपजप्याः क्रुद्धारयः कुलीनाः स्वराज्याभिलाषिणस्तानुपजपेदिति हेतुः। कर्तरि कर्तव्यव्यपदेशमुपजपेदित्यर्थः। उपजपेद् ग्राहयेदित्यर्थः। उपजाप आश्रयाद्विश्लेषात्महितानुष्ठानप्रतिपादनम्। तेन चारिणा सुकृतमप्यभिमतदुर्गस्थेन वा किञ्चित्प्रारब्धं बलाटविकपार्ष्णिग्राहादिकोपनार्थं मध्यमोदासीनानामन्यतरेण सह संधानमित्यादि बुध्येत। युक्ते च दैवे विजिगीषोरनुकूलदैव इत्यर्थः। नक्षत्रग्रहदैवसुमुहूर्तेषु साधकेषु दृष्टस्वप्नदर्शननिमित्तेषु चानुगुणेष्वनुलोमवातादिषु जयमिच्छन्निर्गतभयो दुर्गस्थानानि यथाप्रथमं योद्धुं गच्छेत् ॥१९७॥

(२) **सर्वज्ञनारायणः**। उपजप्यान् भेद्यान्। युक्तेऽनुकूले दैवे ग्रहादौ ॥१९७॥

(३) **कुल्लूकः**। तदानीं चोपजापार्हान् रिपुवंश्यान् राज्यार्थिनः क्षुब्धानमात्यादींश्च भेदयेत् उपजपेनात्मीयकृतां च तेषां चेष्टां जानीयात्, शुभग्रहदशादिना शुभफलयुक्ते दैवेऽवगते निर्भयो जयेप्सुर्युध्येत ॥१९७॥

(४) **राघवानन्दः**। किंचान्य**दुपेति**। उपजप्यानरिवंश्यान् राज्यार्थिनः क्रुद्धानमात्यादींश्च उपजपेत् भेदयेत्। उपजपेनात्मसात्कृतानां तेषां चेष्टाः स्वपरपक्षपातान् जानीयादिति। युक्तशुभफलदानाऽनुकूले दैवे ग्रहनक्षत्रादौ। जयप्रेप्सुः जेष्यामीति कृतनिश्चयः अपेतभीः मरिष्यामीति वा गतभीः ॥१९७॥

(५) **नन्दनः**। तत्कृतं शत्रुकृतं। उपजापमिति शेषः। दैवे युक्ते सुनिमित्तादिभिर्दैवानुकूल्ये सति ॥१९७॥

(६) **रामचन्द्रः**। उपजप्यान् भेद्यान् उपजपेत् भेदयेत्। च पुनः तत्कृतं बुध्येत जानीयात् भेदकृत्कृतं कार्यं युद्धे जानीयादित्यर्थः। च पुनः युक्ते दैवे अनुकूले दैवे ग्रहादौ चैवंविधो राजा भेदकृत्कृतं कार्यं युद्धे जानीयादित्यर्थः। च पुनः युक्ते दैवे ग्रहादौ चैवंविधो राजा जयं प्रेप्सुः युध्येत ॥१९७॥

(७) **मणिरामः**। उपजप्यान् रिपुवंश्यान्। राज्यार्थिनःक्षुद्रामात्यादींश्च उपजपेत् भेदयेत् आत्मीयान्कुर्यात्। तत्कृतं आत्मीयकृतानां चेष्टितं युक्ते च दैवे शुभग्रहदशादिना शुभफलयुक्ते दैवेऽवगते ॥१९७॥

(८) **गोविन्दराजः**। **उपजप्यानिति**। तदन्वयिनो राज्यार्थिनः क्रुद्धान्भृत्यांश्चोपजापार्हानुपजपेत्। तत्कृतञ्च यत्तत्कृत्यं यत्तज्जानीयात् ग्रहसौम्यादिनाऽनुकूले दैवे सति विजयेप्सुरपगतभयो युध्येत ॥१९७॥

**साम्ना दानेन भेदेन समस्तैरथवा पृथक्।**
**विजेतुं प्रयतेतारीन्न युद्धेन कदाचन ॥१९८॥**

(१) **मेधातिथिः**। न सहसा युध्येत। एतावत्प्रथमं विशिष्टस्थापनोपदेशनं सुमुखं च मिथो सहासनकथासहदारदर्शनादि। **दानं** विधानं द्रव्याणां हिरण्यादीनां प्रीत्युत्पादनार्थं प्रतिपादनम्। **भेदस्त**त्कुलीनादेरुपसंग्रहः। ततो विशेषणाच्च तत्रावित्रासनमित्याद्यकारणम् ॥१९८॥

(२) **सर्वज्ञनारायणः**। कदाचन सामादिसंभवे ॥१९८॥

(३) **कुल्लूकः**। प्रीत्यादरदर्शनहितकथनाद्यात्मकेन साम्ना हस्त्यश्वरथहिरण्यादीनां च दानेन तत्प्रकृतीनां तदनुयायिनां च राज्यार्थिनां भेदेन एतैः समस्तैर्व्यस्तैर्वा यथासामर्थ्यमरीञ्जेतुं यत्नं कुर्यान्न पुनः कदाचिद्युद्धेन ॥१९८॥

(४) **राघवानन्दः**। प्रकारान्तरेणारिवश्यत्वे युद्धं न कुर्यादित्याह **साम्नेति**। पृथक् प्रत्येकं तत्र सामादि संबध्यते। समस्तैस्त्रिभिर्वा ॥१९८॥

(५) **नन्दनः**। एवमभियुज्य शत्रुं सामदानभेदैः सादयेन्न युद्धेनेत्याह **साम्ना दानेनेति** ॥१९८॥

(७) **मणिरामः**। युद्धे निषेधमाह **साम्नेति** ॥ ॥१९८॥

(८) **गोविन्दराजः**। **साम्नेति**। 'विजेतुं प्रयतेतारीन्न युध्येत कदाचन।' साम्ना प्रीत्यावरदर्शनेन हितकथनाद्यात्मकेन दानेन च हिरण्यादीनां भेदनेन च तत्प्रकृतीनां तदन्वयिनाञ्च विश्लेषणेनैवं तैर्व्यस्तैः समस्तैर्वा यथोपयोगं विजेतुमरीन्प्रयतेत। न पुनः कदाचिद्युध्येत ॥१९८॥

**अनित्यो विजयो यस्माद्दृश्यते युध्यमानयोः।**
**पराजयश्च संग्रामे तस्माद्युद्धं विवर्जयेत् ॥१९९॥**

(१) **मेधातिथिः**। यस्मान्नायं नियमो दृश्यते यो जयति सोऽत्यन्तबलवानवश्यं, तेन यश्च पराजीयते सोऽत्यन्तं दुर्बलश्चावश्यमित्यनित्यो विजयः ॥१९९॥

(२) **सर्वज्ञनारायणः**। पराजयश्च संग्रामे प्राप्तिकः दानाद्यैर्जयपराजयशङ्कापि ॥१९९॥

(३) **कुल्लूकः**। यस्माद्युध्यमानयोर्बहुलबलत्वाद्यल्पबलत्वाद्यनपेक्षमेवानियमेन जयपराजयौ दृश्येते, तस्मात्सत्युपायान्तरे युद्धं परिहरेत् ॥१९९॥

(४) **राघवानन्दः**। **न युद्धेनेति**। तत्र हेतुरनित्य **इति**। पराजयोऽपीति ॥१९९॥

(५) **नन्दनः**। अत्र हेतुमाह **अनित्यो विजय** इति ॥१९९॥

(६) **रामचन्द्रः**। विजयः अनित्यः पराजयोऽपि संग्रामेऽनित्यः ॥१९९॥

(७) **मणिरामः**। निषेधे हेतुमाह **अनित्येति** ॥१९९॥

(८) **गोविन्दराजः**। **अनित्य इति**। युध्यमानयोर्यतो बलवदबलस्थानापेक्षायामेवानियमेन जयपराजयौ दृश्येते। तस्मादुपायान्तरसंभवे सति युद्धं विवर्जयेत् ॥१९९॥

**त्रयाणामप्युपायानां पूर्वोक्तानामसंभवे।**
**तथा युध्येत संपन्नो विजयेत रिपून्यथा ॥२००॥**

(१) **मेधातिथिः**। सामादीनामसाधकत्वे संदिग्धेऽपि जये समानेऽपि, किं पुना रूपेण सह तेन प्रकारेण युध्येत येन प्रकारेणात्मनो जयः स्यात्। जये राज्यं, वधेऽपि स्वर्ग इत्युभयथापि जपः। परप्रत्यूहकल्पना कूटयुद्धादिप्रकारः अत्यन्तोच्छेदानुसरणपीडनाभ्यां सहसा निष्कार्यः। तथा च व्यास आह "पुनरावर्तमानानां निराशानां च जीविनाम्। न शक्येदग्रतः स्थातुं शक्रेणापि धनञ्जय"॥ यदा संदिग्धं पराजयं तदाऽपक्रमणं युक्तम्। निर्गतो हि जीवो न कार्यमासादयति, येन भद्राणि पश्यति, स्वर्गमर्जयति **मृत इति** ॥२००॥

(२) **सर्वज्ञनारायणः**। यथा येन प्रकारेण वञ्चनादिनापि विजयते। इति षाड्गुण्यप्रकरणम् ॥२००॥

(३) **कुल्लूकः**। पूर्वोक्तानां त्रयाणामपि सामादीनामुपायानामसाधकत्वे सति जय-पराजयसंदेहेऽपि तथा प्रयत्नवान्सम्यग्युध्येत, यथा शत्रूञ्जयेत्। यतो जयेऽर्थलाभोऽभिमुखमरणे च स्वर्गप्राप्तिः, निःसंदिग्धे तु पराजये युद्धादपसरणं साधीयो यथा वक्ष्यति (७।२१३) 'आत्मानं सततं रक्षेत्' इति मेधातिथिगोविन्दराजौ ॥२००॥

(४) **राघवानन्दः**। अन्यथानुपपत्तौ तत्कार्यमित्याह **त्रयाणामिति**। त्रयाणां भेदान्तानां परिक्षये सामादीनां अरिवश्यानुपायत्वे ॥२००॥

(५) **नन्दनः**। उपसंहरति **त्रयाणामपीति** ॥२००॥

(६) **रामचन्द्रः**। त्रयाणां उपायानां सामदानभेदानां परिक्षये। संयत्तः सावधानः।

(७) **मणिरामः**। जयपराजयसंदेहे युद्धमाह **त्रयाणामिति**। तथाच निःसंदिग्धे पराजये अपसरणमेव साधीय इत्यर्थः ॥२००॥

(८) **गोविन्दराजः**। त्रयाणामप्युपायानां पूर्वोक्तानां परिक्षये। ततो युध्येत **संयत्त इति**। सामादिनां पूर्वोक्तानामुपायानामसाधकत्वे सति जयपराजयसन्देहे तथा सावधानो युध्येत यथा शत्रून्विजयेत्। यदि नो जयेत्तदा स्वर्गनिःसंदिग्धे पुनः पराजये निःसरणं साधयेद्यथा वक्ष्यति **'आत्मानं सर्वतो रक्षेदि'ति** ॥२००॥

**जित्वा संपूजयेद्देवान्ब्राह्मणांश्चैव धार्मिकान्।**
**प्रदद्यात्परिहारांश्च ख्यापयेदभयानि च ॥२०१॥**

(१) **मेधातिथिः**। येनकेनचित्प्रकारेण जित्वाऽरिं लब्धप्रशमनमिदमतोऽस्मिन्पुरे जनपदे **देवब्राह्मणांश्च धार्मिकान्**विहितानुष्ठायिनो यथा सामर्थ्यात्प्रतिषिद्धवर्जं कामात्स्वा-तन्त्र्येणारीन् जित्वा साध्यप्रवृत्तादिकं गन्धधूपपुष्पद्रव्यं सविभागारफोटनादिसंस्कारद्वारेण यथार्हमभ्यर्चयेत्।

कुटुंबिनां परिहारार्थं स्थितिर्यथाप्रवृत्तिविशिष्टकरभारशुल्कप्रदेशानां प्रदानेन तथा तया वा संवत्सरमेको द्वौ वा दद्यादुच्चानां च पौरजानपदबलानामातपादिडिण्डिमकगदापातेन ख्यापयेत्तैर्यैः स्वाम्यनुरागादस्थानमपचितं तेषामप्यारक्षान्तं यथा स्वं स्वं व्यापारमनुतिष्ठं-त्विति ॥२०१॥

(२) **सर्वज्ञनारायणः**। लब्धप्रशमनममाह **जित्वेति**। परिहारान् अग्रहारान्। अभय-ख्यापनं यैरस्माभिः सह प्राग्युद्धं कृतं तेषामधुनाऽभयमित्यादि ॥२०१॥

(३) **कुल्लूकः**। परराष्ट्रं जित्वा तत्र ये देवास्तान् धर्मप्रधानांश्च ब्राह्मणान् भूमि-सुवर्णादिदानसंमानादिभिः पूजयेत्। जितद्रव्यैकदेशदानादिनैव चेदं पूजनं। तदाह **याज्ञवल्क्यः** (आ. अ. १३.३२३) 'नातः परतरो धर्मो नृपाणां यद्रणार्जितम्। विप्रेभ्यो दीयते द्रव्यं प्रजाभ्यश्चाभयं सदा'। तथा देवब्राह्मणार्थं मयैतद्दत्तमिति तद्देशवासिनां परिहारान्दद्यात्। तथा स्वामिभक्त्या यैरस्माकमपकृतं तेषां मया क्षान्तमिदानी निर्भयाः सन्तः सुखं स्वव्यापार-मनुतिष्ठन्त्वित्यभयानि ख्यापयेत् ॥२०१॥

(४) **राघवानन्दः**। जयोत्तरं यत्कर्तव्यं तदाह **जित्वेति**। देवाद्यर्चनं प्रतिपत्तिकर्मोत्तर-जयसूचनार्थं वा। परिहारान्वस्त्रालंकारादीन्। तद्देशवासिभ्यः अभयानि स्वस्वव्यापारान-नुतिष्ठन्तु मा भयं कुरुतेति ॥२०१॥

(५) **नन्दनः**। सति विजये कर्तव्यमाह **जित्वा संपूजयेदिति**। परिहारान्करपरित्यागान्। तत्रत्यानामभयानि डिण्डिमघोषादिना ख्यापयेत् ॥२०१॥

(६) **रामचन्द्रः** । ब्राह्मणान् परिहारान् अग्रहारान् प्रदद्यात्। च पुनः अभयानि स्थापयेत् यैरस्माभिः प्राग्युद्धं कृतं तेषामभयमिति भावः ॥२०१॥

(७) **मणिरामः** । परिहारान् देवब्राह्मणार्थं मयैतद्दत्तमिति तद्देशवासिनां ग्रामादीन् ॥२०१॥

(८) **गोविन्दराजः**। **जित्वेति**। परराष्ट्रं जित्वा तत्रत्यान्देवान् धर्मप्रधानान्ब्राह्मणांश्च दानमानादिभिः पूजयेत्। तथा श्रोत्रियादिगताऽवश्यदानेषु मयैतदनुज्ञातमित्येवं परिहारान् दद्यात् तथा स्वामिभक्त्याऽस्माकं यैरपकृतं तेषां मया क्षान्तमिदानीमाश्वस्ताः सन्तः स्वव्यापारमनुतिष्ठन्त्वेवं अभयानि ख्यापयेत् ॥२०१॥

**सर्वेषां तु विदित्वैषां समासेन चिकीर्षितम्।**
**स्थापयेत्तत्र तद्वंश्यं कुर्याच्च समयक्रियाम् ॥२०२॥**

(१) **मेधातिथिः**। एवमनुग्रहे क्रियमाणेऽपि यदा पौरजानपदानामन्येषां वा स्वाम्यनुरागादहं वक्तृतैजसभावो बहुमतः स्यादिति मन्येत मदीयस्य दण्डोऽवस्थातुं न शक्नुयात्तदा एष पौरादीनामभिप्राय इति संक्षेपेण ज्ञात्वा––नैतदेवमिच्छति तत्कुलीनं कर्तुमिच्छत्ययमेव तस्मिन्देशे तद्वंश्यं मृदुमलं प्रियसुखकलत्रं तेन' संहततत्प्रकृतिभिश्च प्रधानादिभिः समयं कुर्यात् समकोशदानादि परिमाणं च भवता मम दैवाकारेण पापेन भवितव्यम्, कार्याकार्ये कालेन स्वयमुपस्थातव्यमुभयतो दण्डेन कोशेन चेत्यादि ॥२०२॥

(२) **सर्वज्ञनारायणः**। एषां परराष्ट्रे प्रकृतिभूतानां। समासेन समुदायेन। तद्वंश्यं शत्रोरेव वंश्यं। समयक्रिया समयस्य क्रिया––न त्वयास्मान्नियमाच्चलितव्यमिति ॥२०२॥

(३) **कुल्लूकः**। एषां शत्रुनृपामात्यानां सर्वेषामेव संक्षेपतोऽभिप्रायं ज्ञात्वा तस्मिन्राष्ट्रे बलनिहतराजवंश्यमेव राज्येऽभिषेचयेत्। इदं कार्यं त्वयेदं नेति तस्य तदमात्यानां च नियमं कुर्यात् ॥२०२॥

(४) **राघवानन्दः**। परराज्ये स्ववंश्यान्नाभिषिंचेदपि तु तद्वंश्यानित्याह **सर्वेषामिति**। सर्वेषाममात्यादीनां चिकीर्षितं स्ववंश्यपक्षपातित्वं तद्राज्यवंश्यपक्षपातित्वं वेत्ति। समयक्रिया 'त्वयातः परमिदं कार्यमिदं ने'ति नियमनम्। उपजप्य राज्यार्थितद्वंश्यस्थापनेन राज्यान्तरलाभसंभावना दृष्टफलमिति भावः ॥२०२॥

(५) **नन्दनः**। एषां शत्रोरमात्यादीनाम्। तत्र शत्रुदेशे तद्वंश्यं स्थापनेन सह युद्धं वयञ्चैवं करिष्यामह इति। समयक्रियां कुर्यात् ॥२०२॥

(६) **रामचन्द्रः**। सर्वेषामेषां परराष्ट्रप्रकृतिभूतानां समासेन समुदायेन चिकीर्षितं विदित्वा तत्र तस्मिन्राज्ये तद्वंश्यं स्थापयेत् अविद्यमाने राजनि सति। च पुनः समयक्रियां कुर्यात् त्वयाऽस्माद्धर्मान्न चलितव्यमिति ॥२०२॥

(७) **मणिरामः**। समयक्रियां इदं कार्यं त्वया कर्तव्यमिदं नेति तदमात्यानां च नियमं कुर्यात् ॥२०२॥

(८) **गोविन्दराजः**। **सर्वेषामिति**। तेषां परकीयानां सर्वेषां संक्षेपतोऽभिलषितं ज्ञात्वा

